


पंख फैले दो क्या बोले? उड़ान की सच्ची शक्ति है जी

**पारले-जी**

स्वाद भरे, शक्ति भरे.

भारत के सबसे ज्यादा बिकनेवाले बिस्किट.

everest/93/PP/172-hn

# आपणः पिहितः आसीत्

| | |
|---|---|
| पिता - करदीपम् आनीतवान् वा भवान् ? | You got the torch ? |
| पुत्रः - नैव तात ! आपणः पिहितः आसीत् । अतः श्वः आनेष्यामि । | No father, the shop was closed, I shall get it tomorrow. |
| पिता - असत्यकथनं किमर्थम् ? आपणः तु उद्घाटितः एव अस्ति । | Why did you lie ? The shop is still open ! |
| पुत्रः - नैव तात ! अहं यदा गतवान् तदा पिहितः आसीत् । | No father, the door was closed when I went there. |
| पिता - तस्मात् एव आपणात् मया अर्धघण्टातः पूर्वं लेखनी आनीता । एवं स्थिते आपणः पिहितः आसीत् इति कथनं तु ... | I bought a pen from the same shop half an hour back ! How do you say then that the shop was closed ? |
| मित्रम् - मित्र ! कदा गतवान् आसीत् भवान् ? | My friend, what was the time when you went there ? |
| पुत्रः - सार्धपञ्चवादने । | Five thirty. |
| मित्रम् - तर्हि दिनेशवर्य ! एतस्य कथनं मिथ्या न । अहम् अपि तत्समये गत्वा आपणं पिहितं दृष्ट्वा प्रत्यागतः । इदानीम् उद्घाटितम् अपि दृष्ट्वा आगतवान् अस्मि । | Dinesh Sir, what he says is not untrue. I had also been there then. The shop was closed and I returned. I have now found that it is open. |
| पिता - स्यात् नाम । तर्हि वत्स ! इदानीं गत्वा करदीपं क्रीत्वा आगच्छतु । | Could be OK. Now go to the shop and get the torch. |



# चन्दमामा

मे - १९९४

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४.००

वार्षिकं ग्राहकशुल्कं रू. ४८.००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः'   सञ्चालकः - 'नागिरेड्डी'

## अनुभवरूपः निकषः



अस्य वर्षस्य मे मासस्य २४ तमे दिनाङ्के बुद्धपूर्णिमादिनम्। राजकुमारः सिद्धार्थः पूर्णिमायाम् एव जन्म प्राप्तवान् इति जनाः वदन्ति (क्रि.पू. ५६७ तमे वर्षे, अन्यगणनानुसारं क्रि.पू. ५६३ तमे वर्षे)। अपरः अवलोकनीयः विषयः नाम सिद्धार्थः बुद्धनाम्ना परिवृत्तः इति यत् तदपि कस्याञ्चित् पूर्णिमायाम् एव। ततः चत्वारिंशत् वर्षाणाम् अनन्तरं बुद्धः निर्वाणं प्राप्तवान् इति यत् तदपि कस्याञ्चित् पूर्णिमायाम् एव।

जनानां कष्टं दुःखं च दृष्ट्वा एषः राजकुमारः स्वकीयं सुखजीवनं त्यक्त्वा वैराग्यं प्राप्तवान् इति यत्, मनुष्यस्य दुःखस्य मूलं कारणम् अन्वेष्टुं प्रवृत्तः इति यत्, अन्ते सिद्धार्थः बोधिवृक्षस्य अधः उपविश्य यदा ध्यानमग्नः आसीत्, तदा तस्य ज्ञानोदयः जातः इति यत्, एतत् सर्वम् अपि सर्वैः सम्यक् एव ज्ञातम् अस्ति।



बुद्धः स्वशिष्यान् उपदिशति स्म। तेन यत् उपदिष्टं, तद्विषये एकत्र एकम् उल्लिखितम् अस्ति - ''अधिकारमात्रेण यत् आदिश्यते, तत् चिन्तनं विना मा अङ्गीकरोतु। सम्प्रदायस्य आधारः अस्ति इति उच्यते चेदपि विवेचनं विना मा अङ्गीकरोतु। यः कोऽपि अभिप्रायः यत्र कुत्रापि लिखितं स्यात् नाम। सः भवतः गुरुणा एव बोधितं स्यादपि। तथापि तं मा अङ्गीकरोतु। प्रत्येकम् अपि विषयं सम्यक् विचिन्त्य भवतः अनुभवरूपनिकषद्वारा परीक्षां करोतु'' इति।

अहो, कीदृशं वस्तुनिष्ठं चिन्तनं बुध्दस्य! सर्वोऽपि विषयः परीक्ष्य एव द्रष्टव्यः इति या प्रवृत्तिः अस्ति, सा सर्वेषाम् अपि जीवनस्य अङ्गभूता स्यात्। भवन्तः परितः यत् पश्यन्ति, अन्यतः यत् शृण्वन्ति, यत् पठन्ति भवन्तः, तस्य सर्वस्यापि परीक्षा अनुभवरूपनिकषेण करणीया। अन्यच्च भवन्तः, यदा अन्यैः सह स्वस्य अनुभवस्य विनिमयं कुर्वन्ति, तदा अन्येभ्यः भवद्भिः दीयमानः अनुभवसारः अन्येषां हितार्थम् इति मा विस्मरन्तु।

सम्पुटः - ११   मे - १९९४   सञ्चिका - २

प्रतिकृतिमूल्यं रू. ४.००  *  वार्षिकं ग्राहकशुल्कं रू. ४८.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अनन्यगतिकता - | Sole resource | पणः - | Bet |
| अप्रतिमः - | Matchless | परिवृत्तम् - | Changed |
| अहितम् - | Harm | पाटलपुष्पम् - | Rose |
| असूयति - | Feels jealous | पारावतः - | Pigeon |
| उपचयः - | Produce | पितृभगिनी - | Father's sister |
| उपवनम् - | Park | प्रतिवेशी - | Neighbour |
| कण्टकम् - | Thorn | प्रियवक्ता - | One who speaks sweetly |
| कारण्डवः - | Duck | मध्येमार्गम् - | On the way |
| चटकः - | Sparrow | मुकुलम् - | Bud |
| जलप्रलयः - | Deluge | मृत्युलेखः - | Testament |
| जिज्ञासा - | Desire to know | लोहपत्रम् - | A tin sheet |
| डयनम् - | Flying | वातामफलम् - | Almond |
| तरणपटुः - | Swimmer | विवेचनम् - | Discretion |
| दायादः - | Cousin | विशेषतः - | Specially |
| द्रुह्यति - | Seeks to harm | वेणुः - | Flute |
| धीवरः - | Fisherman | शङ्कुस्थापनम् - | Laying the foundation |
| निश्चलम् - | Motionless | शिरोभ्रमणम् - | Giddiness |
| निश्शक्तः - | Weakling | समकालीनः - | Contemporary |
| पक्षः - | Wing | सृगः - | Catapult |
| पञ्जिका - | Torch | स्थगयितुम् - | To stop |

वार्ताविशेषः -

# सिङ्गापुरदेशस्य सहकारः

उद्यानानां, विहार-स्थलानां समुद्र-तीराणां च विषये वयं जानीमः एव । सायङ्काले तरुण-तरुण्यः, बालाः, वृद्धाः, सर्वे एतादृशेषु स्थलेषु विहरन्तः समयं यापयन्ति । किन्तु कर्णाटकस्य राजधान्याः बेङ्गलूरुनगरतः अनतिदूरे एतेभ्यः भिन्नं विशिष्टम् एकम् 'उपवनं' निर्मितम् अस्ति । तस्य च नाम 'टेक्नालजिकल् इन्फर्मेषन् पार्क्' इति । एतच्च केन्द्रं परमाधुनिकम् औद्योगिककेन्द्रं भविष्यति । गतस्य जनवरीमासस्य २८ तमे दिनाङ्के बेङ्गलूरुनगरात् १८ कि.मी. दूरे स्थिते 'वैट्फील्ड्' नामके स्थले एतस्य शङ्कुस्थापनं जातम् । एतस्य केन्द्रस्य आरम्भं श्रुत्वा विद्यार्थिनः कीदृशम् आनन्दम् अनुभूतवन्तः इति तु भवन्तः एव ऊहां कुर्वन्तु । एतस्य केन्द्रस्य प्रारम्भोत्सवः सिङ्गापुरदेशस्य प्रधानमन्त्रिणा गो. चोक् टाङ्ग्वर्येण कृतः ।



एतस्य उपवनस्य विषये ज्ञानात् पूर्वं सिङ्गापुरस्य विषये अवश्यं किञ्चित् ज्ञातव्यम् अस्माभिः । यतः सिङ्गापुरस्य स्नेह- सम्बन्धकारणात् एव एतस्य उपवनस्य स्थापनं जातम् ।

द्वितीयजागतिकयुद्धात् पूर्वं (तन्नाम - १९३९ - १९४ काले) बहवः भारतीयाः उपजीविकार्थं सिङ्गापुरम्, मलया, इत्यादीन् प्रदेशान् प्रति गच्छन्ति स्म, ये च फेडरेटेड् मले स्टेट्स (एफ्.एम्.एस्.) इति नाम्ना निर्दिश्यन्ते स्म ।

मद्रास् - नौकास्थानात् तूत्तुकुडि - नौकास्थानकात् वा चिटिकां क्रीत्वा बाष्पनौकाम् (स्टीमर्) आरुह्य ते उद्दिष्टं स्थलं प्राप्नुवन्ति स्म । तत्काले तान् प्रदेशान् गन्तुम् अनुज्ञापत्रस्य पारपत्रस्य वा आवश्यकता न आसीत् । अतः सिङ्गापुरप्रदेशः बहूनां भारतीयानां वासस्थलं जातम् ।

एवं गताः भारतीयाः चीनाजनैः मलयाजनैः वा सम्भूय निवसन्ति स्म । तेषां पारस्परिकसम्बन्धः उत्तमः भवति स्म ।

दक्षिणचीनस्य समुद्रमुखसमीपे अस्ति सिङ्गापुरम् । 'सिंहपुरम्' इति एतस्य अपरं नाम । मलयाभाषया एषः प्रदेशः 'टेमासेक्' (समुद्रनगरम्) इति निर्दिश्यते । आंग्लनाविकः सर् स्टाम्फोर्ड् राफिल्स्वर्यः १८१९ तमे वर्षे यदा एतं प्रदेशम् आगतवान् तदा तत्र केवलं केचन धीवराः निवसन्ति स्म । सः तत्रत्यान् अधिकारिणः दृष्ट्वा एकं सन्धिं

व्यवहारे आनीतवान् । तत् स्थलं वाणिज्यकेन्द्रत्वेन परिवर्तयितुम् ईस्ट् इण्डिया कम्पनी अनुमतिं प्राप्नोत् । ततः तस्य प्रदेशस्य अभिवृद्धिः आरब्धा ।

१८५८ तमे वर्षे तत्र आंग्लसर्वकारस्य समग्रं शासनम् आरब्धम् । ततः तत्रत्या सम्पत्तिः प्रवृद्धा । ततः 'स्ट्रेट् सेटलमेण्ट्स्' केन्द्रं जातम् । ततः आंग्लनौकादलस्य नौकास्थलम्, आग्नेय-एशियाप्रदेशस्य प्रमुखः नौकाश्रयः च एतत् जातम् ।

द्वितीयजागतिकयुद्धकाले किञ्चित्कालं यावत् एषः प्रदेशः जपान्देशस्य अधीनः आसीत् । ततः मित्रपक्षेण एषः देशः स्वयत्तीकृतः । यदा स च प्रदेशः जपान्देशस्य अधीनः आसीत्, तदा सुभाषचन्द्रबोस्वर्यः जपान्देशस्य साहाय्येन 'अजाद् हिन्द् फौज्' नामकं सैन्यदलम् अत्र आयोजितवान्, यस्य च परमं लक्ष्यम् आंग्लशासनात् भारतस्य विमोचनं करणीयम् इति आसीत् । द्वितीयजागतिकयुद्धस्य अनन्तरं तत्रत्याः स्वातन्त्र्यम् इष्टवन्तः ।

१९५९ तमे वर्षे एषः द्वीपप्रदेशः स्वयं पालनाधिकारं प्राप्नोत् । ली कुवान्वर्यः प्रधानमन्त्री जातः । अनन्तरकाले सः एतस्य देशस्य अध्यक्षः अपि जातः । तस्य शासनकाले सिङ्गापुरदेशः विशेष-अभिवृद्धिं प्राप्नोत् । आर्थिकक्षेत्रे अभिवृद्धिं प्राप्तवत्सु देशेषु अन्यतमत्वेन परिगणितः अभवत् अपि । १९९० तमे वर्षे गो चोक् टाङ्गवर्यः प्रधानमन्त्रिणः स्थानं प्राप्तवान् ।




१९९२ तमे वर्षे इण्डोनेशिया देशस्य राजधान्यां जकार्तानगर्याम् एशियादेशानां समावेशः प्रवृत्तः । तत्र अस्माकं देशस्य प्रधानमन्त्री श्री पि. वि. नरसिंहराव्, सिङ्गापुरस्य प्रधानमन्त्री गो चोक् टाङ्ग् च परस्परं समालोच्य निर्णीतवन्तौ यत् 'इन्फर्मेषन् टेक्नालाजिकल् पार्क्' नामकं केन्द्रं स्थापनीयम् इति । एतस्य निर्णयस्य अनुगुणं कर्णाटकौद्योगिक-अभिवृद्धिसंस्था टाटा-औद्योगिकसंस्था च मिलित्वा पूर्वप्रस्तुतस्य औद्योगिककेन्द्रस्य स्वरूपं निश्चितवत्यौ ।

पञ्चकोटिमूल्यात्मिका २४ हेक्टेर्विस्तृता भूमिः कर्णाटकसर्वकारेण निश्शुल्कं दत्ता । एतस्मिन् औद्योगिककेन्द्रे उद्योगावकाशानां विषये संशोधनं प्रचलिष्यति । विकासः, प्रशिक्षणं, वाणिज्यम्, मनोरञ्जनम् इत्यादीनाम् अंशानां समावेशः अत्र यथा स्यात् तथा व्यवस्था कृता अस्ति । लघूद्योगानां, कम्प्यूटर्-साफ्ट्वेर्-संशोधनाभिवृद्धेः च विशेषप्राधान्यम् उपकल्पितम् अस्ति अत्र । एवं हि सम्भाव्यते यत् २०,००० अधिकाः एलेक्ट्रानिक्विषयज्ञाः, कम्प्यूटर्निपुणाः, टेलिकम्युनिकेषन्परिणताः च अत्र उद्योगावकाशं प्राप्नुयुः इति ।

उद्योगावकाशम् अन्विष्य ये विदेशान् गच्छन्ति स्म तादृशाः विशिष्टप्रतिभाशालिनः महामेधाविनः च इतः परम् अत्र उद्योगं प्राप्नुयुः, ततश्च प्रतिभापलायनस्य न्यूनता भवेत् इति च आशास्महे वयम् ।



# अप्रतिमः तरणपटुः

वागीशपुरं कस्याश्चित् नद्याः तीरे अस्ति। तस्मिन् ग्रामे नरेन्द्रः नाम कश्चन तरणपटुः आसीत्। 'अप्रतिमः तरणपटुः' इति ख्यातिः प्राप्तव्या इति तस्य प्रबला इच्छा।

तस्मिन् एव ग्रामे उमा नाम काचित् धनिकपुत्री अपि आसीत्। तस्याः मातापितरौ न स्तः। मातुलः शङ्करः साहाय्यव्याजेन तस्याः गृहे सपरिवारं निवसन् स्वभोगार्थं प्रभूतं धनव्ययं कुर्वन् आसीत्। मातुलपुत्रः पार्वतीशः उमां परिणेतुम् इच्छति स्म। तस्य बुद्धिमत्ता, सौन्दर्यं, सज्जनत्वं वा न आसीत्। अतः तस्मिन् सर्वथा अनुरागः न आसीत् उमायाः। यदि कोऽपि उमां परिणेतुम् इच्छेत् तर्हि तं शङ्करः वदति स्म यत् सा मम पुत्रम् एव परिणेष्यति इति।

उमा एतत्सर्वं जानाति स्म। तथापि सा स्वगृहात् मातुलपरिवारं प्रेषयितुं तु न शक्नोति स्म। यदा सा दशवर्षीया आसीत् तदा एव तस्याः गृहं प्रविष्टवान् आसीत् मातुलः। अहं भागिनेय्याः उपकारं बहुधा करोमि इति, भागिनेय्याः साहाय्यं करणीयम् इत्यतः स्वभूमिम् अपि विक्रीय अत्र आगतवान् अस्मि इति च जनान् वदति स्म सः।

इदनीम् उमा प्राप्तवयस्का अस्ति। मातुलः कथं निवारणीयः इत्येव तस्याः समस्या। बहु विचिन्त्य सा एकम् उपायं चिन्तितवती - 'मया कश्चन समर्थः तरुणः परिणेतव्यः। सः मातुलेन सह स्नेहेन व्यवहरन् मातुलं सन्मार्गे प्रवर्तयेत्, उपायेन वा तं गृहात् प्रेषयेत्' इति।

नरेन्द्रं सा बाल्यादपि जानाति। सः गुणवान् समर्थः च इत्यपि जानाति सा। 'मम साहाय्यं कर्तुं नरेन्द्रः एव समर्थः' इति निश्चित्य सा कदाचित् नरेन्द्रं दृष्ट्वा



वस्तुस्थितिं, स्वस्य चिन्तनं च निवेद्य प्रार्थितवती यत् भवता अहं परिणेतव्या इति।

नरेन्द्रः उमायाः परिणयम् इच्छति एव। किन्तु तस्य आतङ्कः यत् उमा परिणीता चेत् 'अप्रतिमः तरणपटुः' इति ख्यातिं प्राप्तुं न शक्येत इति। अतः सः स्वस्य गुरुं परमानन्दं सर्वं निवेद्य मार्गदर्शनं प्रार्थितवान्।

परमानन्दः उमां जानाति । सः तरणविषये नरेन्द्रं कांश्चन प्रश्नान् पृष्टवान्। नरेन्द्रः योग्यानि उत्तराणि उक्तवान्। तानि श्रुत्वा परमानन्दः उक्तवान् - "तरणविषये भवतः ज्ञानम् उत्तमम् अस्ति। 'अप्रतिमः तरणपटुः' इति ख्यातिः प्राप्तव्या इति भवतः इच्छा। उमा अपि मां पूर्वं कदाचित् उक्तवती आसीत् यत् अहम् अप्रतिमं तरणपटुम् एव परिणेष्यामि इति । अतः यदि भवान् अप्रतिमतरणपटुत्वम् अप्राप्य एव उमां परिणयेत् तर्हि उभयोः अपि जीवने अतृप्तिः उत्पद्येत । तदर्थं भवान् रूपपुरं गत्वा गणेशनामकं पश्यतु। 'मया प्रेषितम्' इति उक्तं चेत् सः भवन्तं तरणतन्त्राणि सर्वाणि बोधयिष्यति। ततः प्रत्यागत्य भवान् उमां परिणयतु" इति।

ततः नरेन्द्रः रूपपुरं गतवान्। तत्समये गणेशः गृहे न आसीत्। रोगग्रस्तस्य पितुः चिकित्सार्थं वैद्यम् आनेतुं पार्श्वग्रामं गतवान् आसीत् सः। "सः कदा प्रत्यागच्छेत्?" इति तद्गृहसदस्यान् पृष्टवान् नरेन्द्रः।

"तस्य दर्शने भवतः यावती त्वरा ततोऽपि अधिकत्वरा अस्ति तस्य प्रत्यागमने । यतः श्वः मम पुत्रीं द्रष्टुं वरपक्षीयाः आगमिष्यन्ति" इति उक्तवती काचित् वृद्धा।

तां गणेशस्य मातरं भावयन् नरेन्द्रः आश्चर्येण पृष्टवान् - "गृहे ज्येष्ठः तीव्रम् अस्वस्थः। एवं स्थिते वधूपरीक्षा अपि कथं निश्चिता?" इति।

"यस्मिन् गृहे बहवः भवन्ति तत्र कस्यचित् अस्वास्थ्यं सदापि भवति एव। अस्वस्थाः पुनः स्वस्थाः भविष्यन्ति। अतः अस्वास्थ्यकारणतः शुभकार्यं कथं वा स्थगयितुं शक्येत?" इति पृष्टवती सा वृद्धा।

नरेन्द्रः यावत् ततः निर्गन्तुम् उद्युक्तः

तावता कश्चन मल्लसदृशः दृढकायः तत्र आगतवान् । सः नरेन्द्रं पृष्टवान् - "भवान् इतः पूर्वं कदापि न दृष्टः मया । भवान् गणेशस्य बन्धुः तु न खलु ?" इति ।

तदा नरेन्द्रः आश्चर्येण पृष्टवान् - "अहं नरेन्द्रस्य बन्धुः न इति कथं ज्ञातं भवता ?" इति ।

"तस्य बान्धवाः सर्वे कृशकायाः । भवादृशः दृढकायः तस्य बन्धुषु कोऽपि नास्ति । तदस्तु, एषः भवत्तः ऋणं किमपि प्राप्तवान् अस्ति वा ?" इति पुनः पृष्टवान् सः मल्लः ।

'आगमनस्य उद्देशम् एतं वदामि वा न वा' इति यावत् नरेन्द्रः चिन्तयन् आसीत् तावता सः मल्लः - "यदि भवान् एतस्मै ऋणं दत्तवान् स्यात् तर्हि तस्य प्रतिप्राप्तिः असम्भवा एव" इति पुनः उक्त्वा ततः निर्गतवान् ।

एतत् श्रुत्वा नरेन्द्रः चिन्तितवान् यत् गणेशस्य अपख्यातिः ग्रामे सर्वत्र प्रसृता स्यात् इति । वस्तुस्थितिः ज्ञातव्या इति उद्देशेन सः ग्रामीणान् बहून् गणेशविषये पृष्टवान् । आपणिकः उक्तवान् यत् गणेशेन मह्यं बहुधनं दातव्यम् इति । क्षीरविक्रयिकः उक्तवान् - 'गणेशः मासद्वयतः क्षीरस्य धनं न दत्तवान्' इति । ग्रामाधिकारी उक्तवान् यत् गणेशः असत्यवादी इति । कर्मकरः देवेशः उक्तवान् यत् गणेशः कार्यं तु सम्यक् कारयति । किन्तु वेतनम् एव न ददाति इति । एतत्सर्वं श्रुतवतः नरेन्द्रस्य खेदः जातः । 'एतादृशम् अहं गुरुत्वेन कथं



भावयेयम् ? एतावद्दूरम् आगतवान् अस्मि इत्यतः सकृत् तं दृष्ट्वा गच्छामि' इति चिन्तितवान् नरेन्द्रः ।

एवं चिन्तयन् नरेन्द्रः ग्रामसीमायां स्थितस्य तटाकस्य समीपं गतवान् । तावता उभौ अभिमुखम् आगतौ । तयोः अन्यतरः नरेन्द्रस्य समीपम् आगत्य - "श्रीमन् ! आवां शकटेन आगच्छन्तौ आस्व । मार्गे शकटं नष्टम् । शकटे भारयुक्तः वृक्षप्रकाण्डखण्डः अस्ति । तम् आनेतुम् आवां न शक्तवन्तौ । यदि तं वृक्षखण्डं भवान् गृहं प्रापयेत् तर्हि आजीवनं भवतः उपकारं स्मरेयम् । मम पितुः चिकित्सार्थं स च वृक्षखण्डः अत्यावश्यकः" इति विनयेन उक्तवान् ।

एषः एव गणेशः इति ज्ञातवान् नरेन्द्रः ।



सः श्रमजनकम् अपि कार्यं महता विनयेन उक्तवान् आसीत्। तस्य प्रार्थनां निराकर्तुम् अशक्नुवन् नरेन्द्रः शकटसमीपं गत्वा काष्ठखण्डं स्वीकृत्य ताभ्यां सह प्रस्थितवान्। मार्गे गणेशः नरेन्द्रस्य उपकारशीलतां बलं च प्रशंसितवान्। यावत् ते ग्रामं प्रविष्टवन्तः तावता देवेशः अभिमुखम् आगतवान्। नरेन्द्रः चिन्तितवान् यत् देवेश-गणेशौ इदानीं कलहं करिष्यतः इति।

देवेशं दृष्ट्वा गणेशः उक्तवान् - "श्वः मम गृहे वधूपरीक्षाकार्यक्रमः अस्ति। स्मरति खलु भवान्?" इति।

तदा देवेशः विनयेन - "अम्बा सर्वम् उक्तवती अस्ति। श्वः यद्यपि अन्यत् कार्यम् अस्ति, तथापि तत् परित्यज्य भवतः गृहम् एव आगमिष्यामि" इति उक्त्वा ततः गतवान्।

अनन्तरं तौ आपणसमीपम् आगतवन्तौ। आपणिकः गणेशं स्वयम् आहूय - "श्वः भवतः गृहे वधूदर्शनकार्यक्रमः अस्ति इति श्रुतम्। वस्तूनि नेतुं भवान् कञ्चित् प्रेषयिष्यति उत अहम् एव कस्यचित् द्वारा वस्तूनि प्रेषयानि?" इति पृष्टवान्।

एतत् श्रुत्वा गणेशः हसन् - "गृहं गत्वा पत्नीं पृष्ट्वा किं किम् आवश्यकम् इति ज्ञात्वा अहं वार्तां प्रेषयिष्यामि। तदस्तु, मधुरखादनार्थं भवता मम गृहम् आगन्तव्यम् एव" इति उक्तवान्। आपणिकः सन्तोषेण विनयेन च अङ्गीकारपूर्वकं शिरः चालितवान्।

ते किञ्चिद्दूरं यदा गतवन्तः तदा अभिमुखम् आगतः ग्रामाधिकारी - "श्वः भवतः पुत्रीं द्रष्टुं वरपक्षीयाः आगमिष्यन्ति इति श्रूयते। स्वस्य अल्पसामर्थ्यं चिन्तयन् भवान् वरपक्षीयैः अधिकं किमपि प्रार्थितं चेत् निराकरणं प्रदर्शयेत्। तथा मा करोतु। प्रथमम् अङ्गीकारं सूचयतु। अनन्तरं यत् करणीयं तत्र साहाय्यार्थं वयं सर्वे स्मः एव" इति उक्त्वा ततः गतवान्।

एतत् सर्वं दृष्टवतः नरेन्द्रस्य अत्याश्चर्यम्। 'गणेशविषये ग्रामे सर्वेषाम् अनादरः' इति सः चिन्तितवान् आसीत्। किन्तु वस्तुस्थितिः तु अन्या एव दृश्यते। एतं विषयं नरेन्द्रः यावत् चिन्तयन् आसीत् तावता मल्लः तत्र आगत्य - "श्रीमन्! पुत्रीं

द्रष्टुं श्वः वरपक्षीयाः आगमिष्यन्ति इति मां किमर्थं न उक्तवान् भवान् ? धनव्यवस्था का कृता भवता ? पूर्वं स्वीकृतम् ऋणम् एव अधिकम् अस्ति इति चिन्ता वा भवतः ? अलं चिन्तया । दैवानुग्रहेण ऋणप्रत्यर्पणं कालान्तरे भवेत् एव'' इति धैर्यवचनानि उक्त्वा ततः निर्गतवान् ।

ततः सर्वे गृहं प्रविष्टवन्तः । नरेन्द्रः काष्ठखण्डम् अवतार्य एकत्र स्थापितवान् । गणेशः नरेन्द्रम् उक्तवान् - ''भवान् नितरां सज्जनः । प्रार्थनामात्रेण मम साहाय्यं कृतं भवता । अद्य मम गृहे एव वासः भवतु भवतः । पामरस्य मम आतिथ्यं स्वीकुर्वन् मां कृतार्थीकरोतु'' इति ।

''मां परमानन्दवर्यः भवत्समीपं प्रेषितवान्'' इति निवेदितवान् नरेन्द्रः । परमानन्दवर्यः कः इति बहुधा चिन्तनेन अपि गणेशेन न स्मृतम् । ''मम अद्य बहूनि कार्याणि सन्ति । भवान् अपि प्रयाणात् श्रान्तः स्यात् । अतः इदानीं किञ्चित् विश्रान्तिसुखम् अनुभवतु । श्वः वार्तालापं करवाव'' इति नरेन्द्रम् उक्तवान् गणेशः ।

अनन्तरदिने वधूपरीक्षा प्रवृत्ता । ग्रामीणाः बहवः आगत्य साहाय्यं कृतवन्तः । देवेशः तु महता उत्साहेन सर्वाणि कार्याणि कृतवान् । गणेशः सर्वान् आदरेण एव पश्यति स्म ।

वरपक्षीयैः वधूः अनुमता । ते वरदक्षिणादिकम् अधिकम् इष्टवन्तः । गणेशः एतं प्रस्तावम् अङ्गीकृतवान् । विवाहः



निश्चितः । वरपक्षीयाः निर्गताः ।

अनन्तरं गणेशस्य माता खेदम् अनुभवन्ती उक्तवती - ''वत्स ! भगिन्याः विवाहार्थं कृतम् ऋणम् एव इतोऽपि न प्रत्यर्पितम् । एवं स्थिते पुत्र्याः विवाहार्थं पुनः ऋणं क्रियते वा ? वरपक्षीयैः प्रार्थितं सर्वम् अङ्गीकृतं खलु भवता ? गृहे तु दारिद्र्यलक्ष्म्याः साम्राज्यम्'' इति ।

तदा गणेशः - ''अम्ब ! पुत्र्याः विवाहः निश्चितः इति तु सन्तोषस्य विषयः । अतः सर्वे सन्तोषेण तिष्ठन्तु । धनादिव्यवस्थाविषये अहं चिन्तयिष्यामि'' इति उक्तवान् ।

तस्मिन् दिने अपराह्णे यदा गणेशः एकाकी आसीत् तदा नरेन्द्रः तम् उद्दिश्य - ''श्रीमन् ! प्रियवक्तृषु विश्वस्य भवान् अग्रे मा

गच्छतु । ये ह्यः प्रोत्साहवचनानि उक्तवन्तः ते भवतः अनुपस्थितौ किं वदन्ति इति जानाति वा भवान् ?'' इति उक्त्वा आत्मना ज्ञातं सर्वं निवेदितवान् ।

तत् श्रुत्वा गणेशः हसन् - ''सर्वं जानामि । अहम् अन्यान् अवलम्ब्य जीवामि । एवं स्थिते ते यदि मां निन्देयुः तर्हि किम् अनौचित्यम् ?'' इति पृष्टवान् ।

''यदि ते निन्दावचनानि वक्तुम् इच्छन्ति तर्हि भवतः पुरतः वदेयुः खलु ? साहाय्यं कृत्वा पुनः निन्दनं किमर्थं करणीयं तैः ?'' इति पृष्टवान् नरेन्द्रः ।

''तैः साहाय्यं यत् क्रियते तत्र मम सौजन्यं कारणम् । अनिवार्यताकारणतः अन्यतः धनं प्राप्य काले कदाचित् प्रत्यर्पयितुं न शक्नोमि । तदा ऋणदातारः कदाचित् मद्विषये कटुवचनानि वदन्ति । दोषः तु मम एव'' इति उक्तवान् गणेशः ।

''भवतः जीवनरीतिः अपूर्वा अस्ति । समस्याः तु बह्व्यः । तथापि निरातङ्कं सर्वं निर्वहति भवान् । एतदतिरिच्य तरणे अपि भवान् नैपुण्यं साधितवान् इति तु नितरां विशेषः । भवतः तरणतन्त्राणि ज्ञातुम् अहम् अत्र आगतवान् अस्मि'' इति निवेदितवान् नरेन्द्रः ।

तदा गणेशः - ''तरणे मम नैपुण्यं कथं स्यात् ? बाल्यात् अपि संसारसागरे तरणे एव मम समग्रः समयः व्ययितः । अतः नद्यां तरणं सर्वथा न जानामि अहम्'' इति उक्तवान् ।

एतत् श्रुत्वा परमानन्दवर्यस्य आशयं ज्ञातवान् नरेन्द्रः । 'संसारसागरे कर्तव्यभारः प्रतिक्षणं मज्जयितुं प्रयत्नं करोति । ततः आत्मानः रक्षणं, स्वस्य इच्छायाः अनुगुणं जीवने अग्रे गमनं च सर्वथा दुस्तरम् । यः जीवननद्यां तरन् अपि अपायग्रस्तः न भवति सः संसारसागरे अपि तरणं कर्तुं समर्थः भविष्यति' इति ज्ञातवान् सः ।

ततः नरेन्द्रः स्वग्रामं प्रतिगतवान् । उमां परिणीय समस्याः उपायेन परिहरन् 'संसारसागरे अप्रतिमः तरणपटुः' इति कीर्तिं प्राप्तवान् च ।





# विचित्रं पुष्पम्
## १२

(नागपुर्याः राजभवनतः अदृश्यतां गतानि शताब्दिकापुष्पाणि समुद्रतीरस्थायां नौकायां दृष्टिगोचराणि जातानि । उत्तुङ्गस्य साहाय्यार्थं कैश्चित् सैनिकैः सह दलनायकः नागसिंहः शताब्दिकापुष्पाणि स्वीकृत्य राक्षसमृगम् अन्विष्यन् गतवान् । समुद्रप्रयाणसमये नागसिंहः उत्तुङ्गं समुद्रे पातयित्वा शताब्दिकापुष्पाणि स्वायत्तीकृतवान् । उत्तुङ्गः तीरम् अन्विष्यन् गतवान् । तदनन्तरम् ......)

माणिक्यपुरीतः प्रस्थितस्य उत्तुङ्गस्य सप्ताहः अतीतः । तद्विषयिका वार्ता कापि न आगता इति कारणतः तस्य भगिन्याः रजन्याः, युवराज्ञ्याः प्रियंवदायाः च चिन्ता आरब्धा यत् उत्तुङ्गः गम्यं स्थानं प्राप्तवान् स्यात् वा इति, तस्य कोऽपि अपायः जातः स्यात् वा इति च ।

राक्षसमृगस्य आक्रमणात् भीताः महिलाः तासां पुत्राः च ये आगताः आसन्, तेषां वसतिव्यवस्थां परिकल्प्य युवराज्ञी प्रियंवदा तेषां दायित्वं निर्वहति स्म । रजनी अपि प्रियंवदया सह एव सुखेन वसन्ती आसीत् ।

किन्तु सप्ताहः अतीतः चेदपि अग्रजः उत्तुङ्गः न प्रत्यागतः इति चिन्तया सा खिन्ना । बाल्यादारभ्य अपि रजनी अग्रजम् उत्तुङ्गं विना कदापि न स्थितवती आसीत् । मित्रैः सह मृगयार्थं गतः चेदपि उत्तुङ्गः गृहे



अनुजा रजनी प्रतीक्षते इति कारणतः शीघ्रम् एव गृहं प्रत्यागच्छति स्म। एतादृशः गुणवान् अग्रजः मम अस्ति इति तु मम सौभाग्यम् इति चिन्तितवती आसीत् रजनी । तत् स्मरन्त्याः रजन्याः दुःखं दिने दिने वर्धते स्म।

कदाचित् रात्रौ रजनी शयनसमये अग्रजस्य उत्तुङ्गस्य विषये चिन्तयन्ती एव निद्रां प्राप्तवती । किञ्चित्कालानन्तरम् 'अग्रज !' इति क्रन्दन्ती उत्थितवती।

रजन्याः क्रन्दनं श्रुत्वा पार्श्वप्रकोष्ठे सुप्ता युवराज्ञी प्रियंवदा उत्थाय आगत्य पृष्टवती - ''भवत्याः अग्रजः आगतः वा ?'' इति।

तदा रजनी - ''न भोः ! स्वप्नः दृष्टः मया । स्वप्ने मम अग्रजः उत्तुङ्गः केनापि नौकातः समुद्रे पातितः'' इति उक्तवती अश्रूणि स्रावयन्ती।

एतत् श्रुत्वा युवराज्ञी रजनीं सान्त्वयन्ती उक्तवती - ''स्वप्नः खलु ! चिन्तां मा करोतु। वीरपुरुषं भवत्याः अग्रजं कोऽपि समुद्रे पातयितुं न शक्नोति। अन्यच्च सः राक्षसमृगेन सह युद्धार्थं न गतवान्, अपि तु तं राक्षसमृगं सुदूरं नीत्वा त्यक्त्वा आगन्तुम् । उत्तुङ्गः स्वकार्ये विजयं प्राप्य एव प्रत्यागमिष्यति । भवती निश्चिन्ततया निद्रां करोतु इदानीम्'' इति।

उत्तुङ्गः नौकां तीरसमीपं नयन्, 'नागसिंहस्य नौका सैनिकानां नौका च दृश्यते वा' इति परितः परिशीलितवान् । किन्तु कुत्रापि किमपि न दृष्टम् उत्तुङ्गेन । किञ्चित्कालानन्तरं सः समुद्रतीरस्थम् उन्नतशिलाप्रदेशं प्राप्तवान् । तरङ्गाः वेगेन आगच्छन्ति स्म। अकस्मात् उत्पन्नः कश्चित् तरङ्गः उत्तुङ्गस्य नौकाम् अधोमुखम् अकरोत्। नौका च तीरे पतिता। उत्तुङ्गः दूरे पतितवान्। सौभाग्यवशात् सः न व्रणितः। तरङ्गाः पुनः यदा कदापि आक्रमणं कुर्युः इति विचिन्त्य उत्तुङ्गः नौकां समुद्रतः दूरे स्थापयित्वा ततः समीपस्थं कौभवगृहं गत्वा द्वारं सशब्दं ताडितवान्। किञ्चित्कालानन्तरं कौभवस्य पुत्री चित्रा द्वारम् उद्घाट्य उत्तुङ्गं दृष्ट्वा साश्चर्यं पृष्टवती - ''भवान् कदा आगतवान् ? किं प्रवृत्तम् ?'' इति।

चित्रा किं पृच्छन्ती अस्ति इति उत्तुङ्गस्य लक्ष्यम् एव न आसीत्। सः त्वरया 'कौभवः

कुत्र ?' इति पृष्टवान्।

तदा चित्रा उक्तवती - "पिता कौभवः सेनाधिपतेः गृहं गतवान् अस्ति" इति।

"महाराजस्य समीपं वा ?" इति पुनः पृष्टवान् उत्तुङ्गः।

तदा चित्रा उक्तवती - "न ! सः सेनाधिपतेः दुर्जयस्य समीपं गतवान् अस्ति" इति।

कौभवः सेनाधिपतेः समीपं गतवान् अस्ति इति ज्ञात्वा उत्तुङ्गः ततः धावन् राजधानीम् आगत्य सेनाधिपतेः गृहं प्राप्तवान्।

दुर्जयस्य गृहे कौभवः दुर्जयेन सह किमपि सम्भाषणं कुर्वन् आसीत्। आगतम् उत्तुङ्गं दृष्ट्वा चकितौ दुर्जयः कौभवश्च उत्थाय उत्तुङ्गं सातङ्कं पृष्टवन्तौ - "उत्तुङ्ग ! किं प्रवृत्तम् ? दलनायकः नागसिंहः कुत्र ?" इति।

तदा उत्तुङ्गः उक्तवान् - "अहं समुद्रे पतितः। दलनायकः कुत्र गतः इति न जानामि अहम्" इति।

उत्तुङ्गस्य वचनं श्रुत्वा कौभवः पृष्टवान् - "राक्षसमृगः आक्रमणं कृतवान् वा ?" इति।

तदा उत्तुङ्गः - "न ! नागसिंहः आक्रमणं कृतवान्" इत्युक्त्वा प्रवृत्तं सर्वं विस्तरेण निवेदितवान्।

एतत् सर्वं श्रुत्वा कौभवः प्रीत्या तस्य स्कन्धयोः उपरि हस्तं संस्थाप्य उक्तवान् - "सौभाग्यवशात् भवतः प्राणापायः न अभवत्। तदस्तु नाम। शताब्दिकापुष्पाणि



स्वीकृत्य नागसिंहः किं कुर्यात् इत्येव न ज्ञायते मया" इति।

कौभवस्य वचनं श्रुत्वा सेनाधिपतिः दुर्जयः आतङ्केन उक्तवान् - "नागसिंहः दुराशापीडितः अस्ति। उत्तुङ्गसमीपे नागसिंहेन यत् कथितं, तदर्थं सः यत्किमपि कुर्यात्। राक्षसमृगाय शताब्दिकापुष्पाणाम् आशां प्रदर्श्य नागसिंहः नागपुर्याः उपरि आक्रमणं कारयति चेत् माणिक्यपुरी यथा राक्षसमृगेन पीडिता तथैव नागपुरी अपि भविष्यति" इति।

तदा उत्तुङ्गः उक्तवान् - "नागसिंहः राक्षसमृगं न दृष्टवान्। सः मृगः पर्वताकारकः अस्ति। समुद्रस्थानां पर्वतानां मध्ये अतीव लघुः मार्गः अस्ति। तेन मार्गेण



राक्षसमृगः नागपुरीम् आगन्तुं सर्वथा न शक्नोति'' इति।

''तर्हि चिन्ता नास्ति । एतं विषयं महाराजं विवेदयाम। यतः राजकुटुम्बरक्षणं प्रधानं कर्तव्यम् अस्माकम्'' इत्युक्तवान् सेनाधिपतिः।

अनन्तरं ते त्रयः अपि महाराजसमीपं गतवन्तः।

महाराजः उत्तुङ्गं दृष्ट्वा ससन्देहं - ''उत्तुङ्ग! भवान् इतोऽपि न प्रस्थितः वा?'' इति पृष्ट्वा सेनाधिपतिं पृष्टवान् - ''नागसिंहः पलायितः वा?'' इति।

तदा सेनाधिपतिः - ''महाराज ! अस्माभिः अनिरीक्षिता काचित् घटना संवृत्ता'' इति वदन् उत्तुङ्गस्य अनुभवं निवेदितवान्।

एतत् सर्वं श्रुत्वा महाराजः - ''दुर्जय ! राजकुटुम्बस्य विषये चिन्तां मा करोतु भवान्। अस्माकं राज्यस्य प्रजानां च कोऽपि क्लेशः न भवेत् । तदर्थं प्रयत्नः करणीयः । वयम् इदानीम् एव समुद्रतीरं गच्छाम। क्षणम् अपि विलम्बः न आचरणीयः । भटान् आज्ञापयतु यत् पञ्जिकाः गृहीत्वा समुद्रतीरं गच्छन्तु इति। राक्षसमृगः प्रकाशात् भीतः भवति इति उत्तुङ्गः उक्तवान् अस्ति। अतः अस्माकं हस्ते पञ्जिकाः भवन्ति चेत् राक्षसमृगः अस्माकं समीपं नागच्छति'' इत्युक्त्वा कौभवम् उक्तवान् - ''कौभव ! भवान् उत्तुङ्गः च इदानीम् एव समुद्रतीरं गच्छताम् । अहं सेनाधिपतिश्च भटैः सह भवन्तौ अनुसरावः। समुद्रतीरं गत्वा अग्रे किं करणीयम् इति चिन्तयाम'' इति।

''तथैव भवतु प्रभो!'' इत्युक्त्वा उत्तुङ्गः कौभवः दुर्जयश्च गतवन्तः।

अनन्तरं कौभवः उत्तुङ्गः च कौभवस्य गृहं गतवन्तौ।

तत्र महिलाः पुरुषाः च तौ एव प्रतीक्षमाणाः आसन्। कौभवः गृहस्य अन्तः गत्वा पत्नीं किमपि उक्त्वा बहिः आगतवान्। अनन्तरम् उत्तुङ्गः कौभवः च वेगेन समुद्रतीरं प्रति गतवन्तौ।

द्वौ अपि समुद्रतीरं प्राप्तवन्तौ । तरङ्गाः वेगेन आगच्छन्तः उन्नताः शिलाः ताडयन्ति स्म।

वातावरणं शान्तम् आसीत्। तौ तत्रत्याम्

उन्नतां शिलाम् आरुह्य परिशीलितवन्तौ यत् कुतश्चित् कापि नौका आगच्छति वा इति। किन्तु सर्वत्र अन्धकारकारणतः किमपि न दृश्यते स्म। किञ्चित्कालानन्तरं समुद्रे दूरे कुत्रापि किमपि अस्पष्टं सम्भाषणं श्रुतम्। क्रमशः सम्भाषणम् उच्चैः श्रूयते स्म।

एतत् श्रुत्वा - ''नागसिंहस्य ध्वनिः खलु!'' इति पृष्टवान् कौभवः।

उत्तुङ्गः किमपि न उक्तवान्। समुद्रम् एव पश्यन् आसीत् सः। बहुकालं समुद्रम् एव पश्यन् सः अनन्तरं कौभवम् उक्तवान् - ''तत्र पश्यतु। राक्षसमृगः'' इति।

''कुत्र ? मया न दृश्यते किल !'' इत्युक्तवान् कौभवः।



तदा उत्तुङ्गः अङ्गुल्या निर्दिशन् उक्तवान् - ''पश्यतु ? मम अङ्गुली यस्यां दिशि अस्ति, तत्र पर्वताकारकः राक्षसमृगः मन्दम् आगच्छन् अस्ति'' इति।

''आम्। सत्यम्। कोऽपि पर्वतः दृश्यते। सः कथं चलितुं शक्नोति।'' इति पृष्टवान् कौभवः।

तदा उत्तुङ्गः - ''पश्यतु। इतःपूर्वं तत्र पर्वताकारः दृष्टः वा भवता ? न खलु! किन्तु इदानीं दृश्यते। तर्हि कथम् आगतः ?'' इति पृष्टवान्।

तदा कौभवः तत्रैव पश्यन् उक्तवान् - ''सत्यम् ! सः न पर्वतः, अपि तु पर्वताकारकः कश्चन मृगः आगच्छन् अस्ति'' इति।

''सः एव राक्षसमृगः। पुरतः नौकाद्वयम् आगच्छत् अस्ति। राक्षसमृगः तत् नौकाद्वयम् अनुसृत्य आगच्छन् अस्ति। तादृशः पर्वताकारकः राक्षसमृगः एतेन लघुमार्गेण अन्तः आगन्तुं न शक्नुयात् खलु!'' इति पृष्टवान् उत्तुङ्गः।

''आम्! सः आगन्तुं न शक्नुयात्। तथापि किं प्रचलति इति पश्याम। तावता महाराजः अपि अत्र आगमिष्यति चेत् वरम्'' इति उक्तवान् कौभवः।

''पश्यतु। महाराजः आगतः एव'' इति उक्तवान् उत्तुङ्गः। कौभवः परिवृत्य दृष्टवान्।

भटाः पञ्जिकाः गृहीत्वा आगच्छन्तः आसन्। तैः सह महाराजः सेनाधिपतिश्च आस्ताम्। ते सर्वे अपि उत्तुङ्ग-कौभवयोः



समीपम् आगत्य स्थितवन्तौ । पञ्जिकानां प्रकाशः महान् आसीत् । तस्मिन् प्रकाशे समुद्रतीरं प्रति नौकाद्वयं वेगेन आगच्छत् दृष्टम् । एकस्यां नौकायां स्थितः कश्चन अङ्गुलीनिर्देशपूर्वकं कमपि तर्जयन् अस्ति । कृष्णवर्णीयः कश्चन पर्वताकारकः मृगः नौकाम् अनुसृत्य मन्दं चलति ।

एतत् दृष्ट्वा - "सः एव राक्षसमृगः" इत्युक्तवान् सेनाधिपतिः ।

"आम् । मया अपि दृष्टः" इत्युक्तवान् महाराजः ।

पर्वताकारकः राक्षसमृगः यथा यथा समीपम् आगच्छति, तथा तथा तस्य आकारः स्पष्टं दृश्यते स्म । सः राक्षसमृगः हस्तेन नौकां ग्रहीतुं प्रयत्नं करोति स्म । सः नौकां स्पृशति चेत् नौका इतस्ततः कम्पते स्म । तत्कारणतः नौकायां स्थितः नौकायाम् एव पतितवान् ।

एतत् सर्वं पश्यन् सेनाधिपतिः भटान् आज्ञापितवान् - "राक्षसमृगस्य उपरि पञ्जिकाः क्षिपन्तु" इति ।

भटाः बाणवत् पञ्जिकाः राक्षसमृगम् उद्दिश्य क्षिप्तवन्तः ।

काश्चन पञ्जिकाः समुद्रे पतिताः । काश्चन नौकायां पतिताः । पञ्जिकानां प्रकाशं सोढुम् अशक्तः राक्षसमृगः एकेन हस्तेन नेत्रे पिधाय अपरेण हस्तेन नौकां गृहीतवान् । ज्वलत् पञ्जिकाद्वयं यदा राक्षसमृगस्य शरीरे स्पृष्टम् अभवत्, तदा अग्निः उत्पन्नः । तदा राक्षसमृगः झटिति जले निमग्नः । अग्निः यदा शान्तः तदा सः भयङ्कररूपेण जलात् उत्थाय नौकाम् अधोमुखं कृतवान् । एतेन नौकास्थाः जले पतिताः । राक्षसमृगः जले पतितानि इतस्ततः प्लवमानानि शताब्दिकापुष्पाणि ग्रहीतुम् आरब्धवान् । पुष्पैः सह केचन भटाः अपि राक्षसमृगस्य हस्ते पतिताः विलापं कृतवन्तः । राक्षसमृगः शताब्दिकापुष्पाणि स्वीकृत्य भटान् दूरे क्षिप्तवान् । एतेन भटाः उच्चैः क्रन्दनं कृतवन्तः ।

समुद्रतीरतः भटैः मुच्यमानाः पञ्जिकाः राक्षसमृगस्य शरीरं निरन्तरं स्पृशन्त्यः आसन् । तथापि राक्षसमृगः शताब्दिकापुष्पाणां सङ्ग्रहणे मग्नः आसीत् । सर्वाणि पुष्पाणि सङ्गृह्य सः प्रतिगतवान् । किन्तु पञ्जिकाः बाणवत् निरन्तरं

राक्षसमृगस्य शरीरे पतन्ति स्म । तदा राक्षसमृगस्य समग्रं शरीरं दग्धम् । तदा तस्य शिरः अग्निगोलः इव दृश्यते स्म । सः उच्चैः हूँकुर्वन् जले निमग्नः । अनन्तरं राक्षसमृगस्य अस्तित्वम् एव न ज्ञातम् ।

तत् भयङ्करं दृश्यं दृष्ट्वा महाराजः उक्तवान् - ''राक्षसमृगः मृतः । यदि सः मृतः न स्यात्, तर्हि सः पुष्पाणां निमित्तं पुनरपि समुद्रस्य उपरि आगमिष्यत् । राक्षसमृगस्य पीडा परिहृता । इदानीं वयं निश्चिन्ताः'' इति ।

किञ्चित्कालानन्तरं केचन भटाः समुद्रे तरन्तः तीरम् आगच्छन्तः आसन् । तान् दृष्ट्वा सेनाधिपतिः महाराजम् उक्तवान् - ''प्रभो ! भवता उक्तं सत्यम् । राक्षसमृगः मृतः । भटानाम् आगमनानन्तरं विस्तरेण विषयं ज्ञातुं शक्नुयाम । कांश्चन भटान् अत्रैव त्यक्त्वा वयं राजधानीं गच्छाम'' इति ।

अनन्तरं कौभवः उक्तवान् - ''नागसिंहस्य का वार्ता इति न ज्ञायते खलु !'' इति ।

तदा उत्तुङ्गः - ''महाराज ! नागसिंहविषये अहं चिन्तयामि । यदि भवतः अनुमतिः अस्ति, तर्हि अद्य रात्रौ अहम् अत्रैव स्थित्वा भटानां द्वारा विस्तरेण विषयं ज्ञात्वा श्वः प्रातः राजधानीम् आगमिष्यामि । भवतः अनुग्रहेण मया उद्दिष्टं कार्यम् अर्धं समाप्तम् । माणिक्यपुरीं प्रति कदा गन्तव्यम् इति अनन्तरं चिन्तयाम'' इति सविनयम् उक्तवान् ।

उत्तुङ्गस्य वचनं महाराजः ससन्तोषम् अङ्गीकृतवान् ।

कांश्चन भटान् उत्तुङ्गेन सह एव त्यक्त्वा महाराजः, सेनाधिपतिः कौभवः च अन्यैः भटैः सह राजभवनं प्रति प्रस्थिताः ।

अनन्तरम् उत्तुङ्गः समुद्रम् एव पश्यन् चिन्तयन् आसीत् यत् वस्तुतः राक्षसमृगः समुद्रे मरणं प्राप्तवान् स्यात् वा, अथवा भयेन पलायितः स्यात् वा, नागसिंहः कुत्र स्यात् इदानीम्, सः राक्षसमृगस्य अपेक्षया अपि भयङ्करमृत्युरूपेण आगमिष्यत् वा इति ।

(आगामिन्यां सञ्चिकायां समाप्तिः)






# बुद्धिमतः प्रार्थना

आरब्धं प्रयत्नं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षसमीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोपितवान् । अधः आगत्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! भयानके श्मशाने मध्यरात्रसमये विषजन्तवः, पिशाचादयः च अटन्ति, न तु मानवाः । किन्तु भवान् समान्यमनुष्यः सन् अपि छलेन अस्मिन् श्मशाने कार्यप्रवृत्तः अस्ति । वस्तुतः भवतः कार्यशीलता प्रशंसनीया एव । किन्तु एतादृशं कष्टदायकं कार्यं यदि भवतः पत्नीपुत्राणां सुखार्थम्, तर्हि उत्तमम् । वृद्धयोः मातापित्रोः निमित्तं पत्नीपुत्राणां सुखम् अगणयन् एतस्मिन् कार्ये प्रवृत्तः चेत् एतस्मात् कार्यात् विरमतु । यतः एतादृशकार्यतः 'पितृभक्तः' इति, 'मातृभक्तः' इति वा कीर्तिं प्राप्नुयात्

# वेतालकथा



श्रवान् । किन्तु सा कीर्तिः अल्पकालिकी एव । अन्यच्च पत्नीपुत्राणां विषये द्रोहः कृतः भवति भवता । एतस्य निदर्शनार्थं कस्यचित् अविवेकिनः राज्ञः कथां श्रावयामि, यश्च वृद्धपितुः वचनपरिपालनार्थं गर्भवत्याः पत्न्याः प्राणानाशकः सञ्जातः । मार्गायासपरिहारार्थम् एतां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं राजा मकरध्वजः अङ्गदेशं पालयन् आसीत् । गच्छति काले सः वृद्धः जातः । शक्तिः क्षीणा जाता तस्य । 'अहम् इतः परम् अधिककालं न जीवामि' इति विचिन्त्य सः पुत्रं स्वसमीपम् आहूय उक्तवान् - ''वत्स ! मलयसिंह ! यद्यपि अहं वृद्धः जातः, तथापि इहलोकस्य आशाभ्यः न मुक्तः अहम् । इतोऽपि कानिचन वर्षाणि जीवितुम् इच्छामि अहम् । किन्तु महात्मानः अपि वार्धक्ये अवश्यं मरणं प्राप्नुयुः इति तु प्रकृतिनियमः । अहम् अपि आसन्नमरणः एव अस्मि । मम मरणानन्तरं मम शरीरस्य दहनं मा करोतु । शवः यथा नष्टं न स्यात् तथा सुरक्षितं स्थापयतु । भविष्यत्कालीनविज्ञानं को वा जानाति ? वैद्यशास्त्रे महती प्रगतिः भवेत् अग्रिमकाले । प्राणदानेन मृतानाम् उज्जीवनम् अपि भवितुम् अर्हति । अथवा महात्मानः ऋषयः स्वतपोबलेन माम् उज्जीवयेयुः । एषः मम अन्तिमः आशयः इति मत्वा कृपया एताम् आशां पूरयतु'' इति ।

पुत्रः एतत् अङ्गीकृतवान् ।

सप्ताहाभ्यान्तरे एव राजा मकरध्वजः दिवङ्गतः ।

अनन्तरं मलयसिंहः पितुः इच्छानुसारं तस्य शवस्य दहनं न कृतवान् । अपि तु तस्य लेपनादिकं कृत्वा श्रीगन्धेन निर्मितायां पेटिकायां सुरक्षितं स्थापितवान् ।

अनन्तरं मलयसिंहः अङ्गदेशस्य राजा जातः । कानिचन दिनानि अतीतानि । मलयसिंहः कलिङ्गदेशस्य राजकुमारीं विद्युल्लतां परिणीतवान् । विद्युल्लता सौन्दर्यवती, सुशीलवती च ।

केचन मासाः अतीताः । ततः युवराज्ञी विद्युल्लता गर्भवती जाता । आस्थानज्योतिषिकः युवराज्ञीं दृष्ट्वा तस्याः गर्भे पुमपत्यम् अस्ति इति उक्तवान् ।

ततोऽपि किमपि वक्तुम् इच्छन् अपि ज्योतिषिकः सङ्कोचेन मौनं स्थितवान् । ज्योतिषिकस्य मुखभावं ज्ञात्वा मलयसिंहः उक्तवान् - "कृपया वस्तुस्थितिं वदतु भवान् । किमपि मा गोपयतु" इति ।

तदा ज्योतिषिकः धैर्येण उक्तवान् - "महाराज ! युवराज्ञयाः सर्पदोषः अस्ति । एकमासाभ्यन्तरे एव सा सर्पेण दष्टा भविष्यति" इति ।

'आवयोः पुत्रः भविष्यति । स च सिंहासनस्य उत्तराधिकारी भविष्यति' इति सन्तोषेण आस्ताम् राजा राज्ञी च । तौ इदानीं ज्योतिषिकस्य वचनं श्रुत्वा कान्तिहीनौ जातौ ।

अनन्तरं ज्योतिषिकः ततः निर्गतवान् ।

नितरां दुःखितां विद्युल्लतां दृष्ट्वा मलयसिंहः तां सान्त्वयन् उक्तवान् - "ज्योतिषिकाः यत् वदन्ति तत् सर्वं सत्यं न भवति । यावत् वा कष्टं भवतु मम, अहं भवत्याः रक्षणं करोमि । भवती निश्चिन्ता भवतु" इति ।

तस्मिन् दिने एव मलयसिंहः भटानां द्वारा आज्ञापितवान् यत् - राज्ये ये ये वल्मीकाः सन्ति, तेषां वल्मीकानां खननं कृत्वा यदि सर्पः दृश्यते, तर्हि मारणीयः । अपि च राज्ये प्रत्येकस्मिन् गृहे अपि एकः नकुलः पालनीयः इति ।

अनन्तरदिनेषु मलयसिंहः कश्चित् गृध्रं पालितवान्, स च गृध्रः सदा अपि पालितशुकः इव मलयसिंहस्य स्कन्धसमीपे



एव डयते स्म ।

युवराज्ञी काम् अपि आपदं विना कानिचन दिनानि यापितवती । तस्मिन् दिने पूर्णिमा । ज्योतिषिकस्य वचनानुसारं सर्पदोषस्य अन्तिमदिनम् ।

तस्यां पूर्णिमारात्रौ युवराज्ञी विद्युल्लता पतिं पृष्टवती - "एतस्यां कौमुद्याम् उद्याने विहारः करणीयः इति इच्छा मम । किं वदति भवान् ? गच्छाव वा ?" इति ।

मलयसिंहः पत्न्याः दोहदं तिरस्कर्तुम् अनिच्छन् 'अस्तु' इति अङ्गीकृतवान् । तौ उभौ अपि उद्यानं गतवन्तौ । तौ उभौ अपि सन्तोषेण उद्याने विहरन्तौ आस्ताम् । तत्काले सर्पदोषस्मरणम् अपि नासीत् तयोः । तस्मिन् समये मलयसिंह-विद्युल्लतयोः

स्कन्धसमीपे स्थितः पालितः गृध्रः झटिति उत्प्लवनं कृत्वा अशोकवृक्षस्य शाखायां सर्पन्तं कृष्णसर्पं गृहीत्वा वेगेन कुत्रापि गतः। किन्तु दौर्भाग्यवशात् सः कृष्णसर्पः गृध्रतः आत्मानं कथमपि रक्षन् युवराज्ञ्याः विद्युल्लतायाः स्कन्धे एव पतितः।

अकस्मात् प्रवृत्तायाः एतस्याः घटनातः भीता विद्युल्लता उच्चैः क्रन्दनं कृतवती। कृष्णसर्पः फणाम् उन्नीय फूत्कुर्वन् विद्युल्लतां स्कन्धे दष्टवान्। विषप्रभावतः सा अनुक्षणं भूमौ पतितवती।

राजवैद्याः धावन्तः आगत्य युवराज्ञ्याः चिकित्सां कृतवन्तः। किन्तु किमपि प्रयोजनं न जातम्। विद्युल्लता दिवङ्गता।

विद्युल्लतायाः मरणेन मलयसिंहः अतीव दुःखितः। सौन्दर्यवतीं विद्युल्लताम् अग्निना दग्धुं न इष्टवान् मलयसिंहः। तस्याः शरीरस्यापि औषधलेपनादिकं कृत्वा तत् श्रीगन्धेन निर्मितायां पेटिकायां सुरक्षितं स्थापितवान् सः। तां च पेटिकां पितुः शवः यस्मिन् प्रकोष्ठे आसीत्, तस्मिन् एव प्रकोष्ठे स्थापितवान् मलयसिंहः। सः कदाचित् चिन्तयति स्म यत् यः कोऽपि महात्मा आगत्य यदि मृतौ उज्जीवयेत् तर्हि वरम् अभविष्यत् इति।

केचन मासाः अतीताः। चैतन्यानन्दनामकः मुनिः बहुकालं यावत् हिमालये तपः कृत्वा कदाचित् अङ्गदेशम् आगतवान्। सः मुनिः मन्दहासपूर्वकं राजानं मलयसिंहम् आशिषा अनुगृह्णन् उक्तवान् - "अत्र प्रवृत्तं सर्वं दिव्यदृष्ट्या ज्ञातुं शक्नोमि अहम्। अतः एतद्विषये भवता किमपि



वक्तव्यं नास्ति। प्रकृतेः विरुद्धं यानि कार्याणि क्रियन्ते तानि अस्माकं नाशाय एव भवन्ति। यः मरणं प्राप्नोति, तस्य शवसंस्कारं कृत्वा दहनकरणं धर्मः। किन्तु भवान् पितुः शवं रक्षितवान् अस्ति। तादृशस्य पापस्य फलम् एव भवतः पत्न्याः अकालमरणम्। इदानीम् अपि पापात् मुक्तः भवितुम् अर्हति भवान्। भवतः पितुः शवस्य दहनं करोतु। तेन भवतः पत्नी जीविष्यति'' इति।

मुनेः वचनं श्रुत्वा मलयसिंहः क्षणकालं विचिन्त्य अनन्तरं मुनिं नमस्कुर्वन् पृष्टवान् - ''स्वामिन्! प्राणदानेन भवान् मृतान् उज्जीवयितुं शक्नोति वा?'' इति।

तदा मुनिः मन्दहासपूर्वकं - ''मम तपोबलेन एकं केवलम् उज्जीवयितुं शक्नोमि। वदतु, कम् उज्जीवयामि? भवतः पितरम्, उत पत्नीम्?'' इति पृष्टवान्।

मलयसिंहः अनुक्षणम् उक्तवान् - ''मम पितरं मकरध्वजम् एव उज्जीवयतु'' इति।

एतत् श्रुत्वा मुनिः - ''वत्स! भवान् विवेकी। दूरदृष्ट्या समयस्फूर्त्या च आत्मीयान् त्रीन् अपि उज्जीवयितुम् इच्छति'' इति वदन् मलयसिंहम् अभिनन्दितवान्।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन्! चैतन्यानन्दस्य वचनेषु विरोधाभासः दृश्यते खलु! यतः सः चैतन्यानन्दः आरम्भे उक्तवान् यत् मम तपश्शक्त्या एकम् एव उज्जीवयितुं शक्नोमि इति। तदा मलयसिंहेन उक्तम् - 'मम पितरम् एव उज्जीवयतु' इति। तत् श्रुत्वा चैतन्यानन्दः मलयसिंहम् उक्तवान् - 'भवान्



विवेकी अस्ति। समयस्फूर्त्या आत्मीयान् त्रीन् अपि उज्जीवयितुम् इच्छति' इति । मुनेः तपश्शक्त्या यदि एकः एव उज्जीवयितुं शक्यः तर्हि त्रयाणाम् उज्जीवनं तु असम्भवः खलु ? अन्यच्च मुनेः वचनानुसारं मलयसिंहः पितुः शवदहनं कारितवान् चेत् दोषपरिहारः अभविष्यत्, तेन च युवराज्ञी विद्युल्लता अपि जीवितवती स्यात् । पत्न्यै प्राणदानविषयं निर्लक्ष्य वृद्धपित्रे प्राणदानं करोतु इति मलयसिंहः चैतन्यानन्दं प्रार्थितवान् यत्, तत् पितृभक्तः इति सर्वे तस्य प्रशंसां कुर्युः इति तात्पर्येण किल ! अपरं च - अत्र मुनेः वचने एव अस्पष्टता दृश्यते । यतः मलयसिंहस्य पिता, तस्य पत्नी चेति द्वौ एव स्तः । किन्तु मुनिना उक्तः तृतीयः मनुष्यः कः ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''राजा मलयसिंहः न केवलं पितृभक्तः, पत्नीं विद्युल्लतां प्राणापेक्षया अधिकम् इच्छति अपि । तस्मात् कारणात् एव पत्नी विद्युल्लता दिवङ्गता चेत् अपि अन्यां परिणेतुं न इष्टवान् मलयसिंहः । मकरध्वजस्य शवसंस्कारः न कृतः इति कारणतः एव विद्युल्लता दिवङ्गता इति चैतन्यानन्देन उक्तम् । एतेन मलयसिंहः चिन्तितवान् यत् यदि मुनिः प्राणदानेन पितरम् उज्जीवयति, तर्हि पापं निवारितं भविष्यति, तेन पत्नी अपि स्वयम् उज्जीविता भविष्यति इति । अतः एव सः मुनिं प्रार्थितवान् - 'पितरम् एव उज्जीवयतु' इति। एतं विषयं सूक्ष्मतया ज्ञातवान् आसीत् मलयसिंहः । अतः एव मुनिः तम् अभिनन्दितवान् । अन्यच्च विद्युल्लता जीविष्यति चेत् तस्याः गर्भस्थः शिशुः अपि अवश्यं जीविष्यति एव खलु ! सः गर्भस्थः शिशुः एव तृतीयः इति मुनिना उक्तम्'' इति।

एवं राज्ञः मौनभङ्गः जातः आसीत्। तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






# वाक्चतुरः चन्द्रचूडः

कस्मिंश्चित् ग्रामे पूर्वं चन्द्रचूडः नाम कश्चन युवकः आसीत् । तस्य प्रबला इच्छा आसीत् यत् नगरे वासः करणीयः इति । ग्रामे तदीयम् एकं प्राचीनं गृहम् आसीत् । तद् गृहं सहस्ररूप्यकैः विक्रीय नगरं गन्तव्यम् इति चन्द्रचूडस्य चिन्तनम् । किन्तु कोऽपि ग्राहकः सहस्रं किं, पञ्चशतं रूप्यकाणि दातुम् अपि सिद्धः न जातः ।

कदाचित् नगरं गतेन चन्द्रचूडेन रामराजः नाम कश्चित् मिलितः । वार्तालापसन्दर्भे रामराजः उक्तवान् यत् अहं श्वासकासव्याधिना पीड्यमानः अस्मि इति, वैद्यः चिकित्सारूपेण परिसरान्तरे वासं सूचितवान् अस्ति इति च ।

तदा चन्द्रचूडः उत्साहेन उक्तवान् - "अन्यस्मिन् परिसरे वासः इत्यस्य अर्थः नगरवासः परित्यक्तव्यः, ग्रामे वासः करणीयः इति खलु ?" इति ।

"तत् तु सत्यम् । अतः नगरात् अनतिदूरे स्थिते कस्मिंश्चित् ग्रामे विक्रेयं गृहं किमपि लभ्येत वा इति पश्यन् अस्मि" इति उक्तवान् रामराजः ।

"अहो, एवं वा ? एवं तर्हि दैवम् एव आवयोः मेलनम् अकरोत् । समीपस्थे ग्रामे मदीयम् एकं गृहम् अस्ति । तत् विक्रीय नगरे वासः करणीयः इति मम इच्छा । गृहस्य मूल्यं न अधिकम् । सार्धैकसहस्ररूप्यकैः तत् क्रीणातु" इति उत्साहेन उक्तवान् चन्द्रचूडः ।

"गृहस्य क्रयणात् पूर्वं मया ज्ञातव्यं खलु भवतः ग्रामस्य वायुः, जलं, परिसरः इत्यादयः उत्तमाः वा न वा इति ?" इति उक्तवान् रामराजः ।

"वायु-जल-परिसरादयः अत्युत्तमाः । तत्र सन्देहः एव मास्तु भवतः । ते उत्तमाः सन्ति इत्यत्र अहम् एव उदाहरणम् । मम दृढकायतां पश्यतु । पञ्चविंशतिवर्षेभ्यः

पूर्वम् अहं यदा एतं ग्रामं प्राप्तवान् तदा चलितुं सर्वथा असमर्थः शय्यायां शयानः च आसम्। इदानीं तु एवम् अस्मि। अत्र कारणं मम ग्रामस्य वायुः, जलं, परिसरश्च'' इति उक्तवान् चन्द्रचूडः।

रामराजः चन्द्रचूडस्य ग्रामम् आगत्य गृहं परिशील्य सार्धैकसहस्ररूप्यकैः तत् क्रीत्वा शुभे मुहूर्ते गृहप्रवेशं कृतवान्।

तस्मिन् ग्रामे चन्द्रचूडस्य विरोधी कश्चन आसीत्। सः रामराजसमीपम् आगत्य - ''सः वञ्चकः चन्द्रचूडः भवन्तं सम्यक् वञ्चितवान् अस्ति। सः असत्यम् उक्तवान् अस्ति। तस्य जन्म एतस्मिन् ग्रामे एव जातम्। तस्य तीव्रम् अस्वास्थ्यं तु कदापि न आसीत्'' इति उक्तवान्।

चन्द्रचूडः इतोऽपि नगरं न गतवान् आसीत्।

रामराजः तम् अन्विष्य उक्तवान् - ''किं भोः, सज्जनः इव व्यवहरन् माम् असत्यम् उक्तवान् खलु भवान्?'' इति।

तदा चन्द्रचूडः उक्तवान् - ''मया असत्यं न उक्तम् एव। भवता अन्यथा गृहीतम्। ग्रामीणाः सदा सरलाः। असत्यवादिनः नगरे भवन्ति, न तु ग्रामे'' इति।

''अये, अलं मिथ्यावचनेन। भवता उक्तम् आसीत् खलु चलितुम् असमर्थः अहं शय्याम् आश्रितवान् आसम् इति? मया तु ज्ञातं यत् भवतः तादृशम् अस्वास्थ्यं कदापि न आसीत् इति'' इति उक्तवान् रामराजः।

''अहो, सः विषयः वा? वदामि, शृणोतु। अहं कदापि न उक्तवान् यत् अहं तीव्रम् अस्वस्थः आसम् इति। 'पूर्वम् अहं चलितुम् असमर्थः, शय्याम् आश्रितवान् च आसम्' इति उक्तवान् इति तु सत्यम् एव। यदा मम जन्म जातं तदा तादृशी एव स्थितिः आसीत् मम। शिशोः स्थितिः तादृशी एव भवति खलु? ग्रामस्य परिसरः उत्तमः इति अहम् उक्तवान्। यदि ग्रामपरिसरः उत्तमः न स्यात् तर्हि अहम् एवं दृढकायः न भवेयं खलु?'' इति उक्तवान् चन्द्रचूडः।

रामराजः चन्द्रचूडस्य वाक्चातुर्यं दृष्ट्वा सन्तोषेण शिरः चालितवान्।



# चन्दमामानुबन्धः - ६५

अस्मद्देशीया पशुपक्षिसम्पत् -

## शान्तिद्योतकाः चटकाः

जलप्रलयकाले नोहान्वर्यः, तत्परिवारसदस्याः, केचन पक्षिणः पशवः च नौकायाम् उपविश्य प्रयाणं कृतवन्तः इति काचित् घटना 'प्राचीनमृत्युलेख' ग्रन्थे उल्लिखिता दृश्यते। नौकया प्रयाणं कुर्वन् नोहान्वर्यः समीपे कुत्रापि भूप्रदेशम् अपश्यन्, भूप्रदेशस्य अन्वेषणार्थं कञ्चित् चटकं प्रेषितवान् । चटकः द्विवारं गत्वा सर्वत्र अन्विष्य प्रत्यागच्छत् । तृतीयवारं गतः सः प्रत्यागमनसमये एकाम् 'आलिव्' शलाकां मुखेन आनयत् । एतत् दृष्ट्वा सन्तुष्टः नोहान्वर्यः, चटकः यस्यां दिशि गत्वा आगतः तां दिशम् अनुसरन् सकुशलं भूप्रदेशं प्राप्तवान् । अतः शान्तिसङ्केतः चटकः यदा चित्र्यते तदा तस्य मुखे काचित् शलाका अपि लिख्यते । शान्तिदूतानां मध्ये यथा कलहः न भवति तथैव चटकानां मध्ये अपि परस्परकलहः विरलः । तावदेव न, चटकाः अन्यपक्षिभिः सह अपि विरलतया एव कलहं कुर्वन्ति।




पारावताः इव दृश्यमानाः चटकाः आकारेण लघवः । चटकानां कण्ठस्य पृष्ठभागे वलयाकारिका रेखा भवति । एते चटकाः 'वलयचटकाः' इति निर्दिश्यन्ते। धूसरवर्णीयाः अन्यविधचटकाः अपि लोके प्रसिद्धाः । धूसरचटकानाम् आकारः वलयचटकानाम् आकारस्य अपेक्षया लघुः । एतेषां पक्षयोः उपरि तत्र तत्र कालकाः दृश्यन्ते ।

चटकेषु आकारेण महान् इति यः ख्यातः तस्य कण्ठम् उभयतः कृष्णकालकाः, नील-धूसररेखाः च भवन्ति । दीर्घं श्वेतवर्णीयं च (क्वचित् धूसरवर्णीयं वा) पुच्छम् एतस्य वैशिष्ट्यम् । 'नक्षत्रचटकाः' अपि लोके प्रसिद्धाः । एते आकारेण नितरां सुन्दराः । धूसरवर्णीयानाम् एतेषाम् उदरस्य अधोभागे श्वेतानि नक्षत्राकारकाणि चिह्नानि भवन्ति । कण्ठं परितः चापि श्वेत-कृष्ण-चिह्नानि भवन्ति । एतत्कारणतः एतेषां तादृशं नाम ।




# रवीन्द्रनाथठागूर्वर्यः

विश्वकविः रवीन्द्रनाथठागूरवर्यः कदाचित् नौकया प्रयाणं करोति स्म । तदा अकस्मात् सः अनारोग्यपीडितः जातः । तस्याम् एव नौकायां कश्चित् वैद्यः अपि प्रयाणं कुर्वन् आसीत् । वैद्यः ठागूरवर्यं परीक्ष्य उक्तवान् यत् भवता प्रयाणं स्थगयित्वा कानिचन दिनानि यावत् विश्रान्तिः स्वीकरणीया इति । तस्य हितचिन्तकाः अपि



उक्तवन्तः - 'वैद्यस्य सूचनां श्रद्धया पालयतु' इति । तेषां सूचनानुसारं रवीन्द्रनाथठागूरवर्यः विश्रान्त्यर्थं 'ब्यूनोस् एमिर्' नगरे अवतीर्णः ।

तत्र ठागूर्वर्यस्य अभिमानिनी विक्टोरिया ओकाम्पोनामिका काचित् प्रीत्या तस्य आह्वानं कुर्वती शिवार्लनगरस्थं स्वीयं भवनं नीत्वा सादरं सत्कृतवती । कानिचन दिनानि अतीतानि । ठागूर्वर्यः यदा स्वस्थः जातः तदा सः कवनानि





लेखितुम् आरब्धवान्।

कदाचित् विक्टोरिया ओकाम्पो ठागूर्वर्येण लिखितानि कवनानि पठन्ती आसीत् । कवनपुस्तके मध्ये मध्ये सुन्दराणि चित्राणि अपि लिखितानि आसन् । ठागूर्वर्येण लिखितानि मानवचित्राणि दृष्ट्वा सा नितरां चकिता । तानि चित्राणि सजीवानि इव भासन्ते स्म । सा महता सन्तोषेण - ''भवान् अपूर्वः चित्रकारः इति विषयं जानाति वा भवान् ?'' इति पृष्टवती।

ठागूर् प्रत्युत्तरं किमपि न दत्तवान्। मन्दहासः एव तस्य उत्तरम् आसीत्। तस्मिन् विद्यमानाम् अपूर्वां चित्रकलाविषयिकीं प्रतिभां प्रकाशयितुं तस्याः प्रोत्साहदायकानि वचनानि अत्यन्तं साहाय्यकानि आसन्।

एषा घटना १९२४ तमे वर्षे प्रवृत्ता। तदा रवीन्द्रनाथठागूर्वर्यस्य वयः ६७ वर्षाणि। तथापि कल्पनाशक्तिमान् ठागूर्वर्यः महता उत्साहेन चित्राणि लेखितुम् आरब्धवान्। अनन्तरं सः आजीवनं - तन्नाम सामान्यतः १७ वर्षाणि यावत् - चित्रकलाक्षेत्रे कृषिं कृतवान्।

ठागूर्वर्यः सामान्यतः मषीलेखन्या कर्गजे चित्राणि लिखति स्म। मानवमुखम्, पक्षिणः, रमणीयानि प्रकृतिदृश्यानि च तस्य चित्रलेखनविषयाः । तस्य चित्रेषु यद्यपि कश्चन विदेशीयप्रभावः दृश्यते, तथापि तानि चित्राणि मौल्ययुतानि दृश्यन्ते स्म। ठागूर्वर्यः वदति स्म यत् जीवने विविधरङ्गेषु विविधानाम् अनुभवानाम् आस्वादनं कृत्वा, तान् अनुभवान् च निरातङ्कम् अभ्यस्य एकाकितया अग्रे गमनम् एव कला इति।

रवीन्द्रनाथठागूर्वर्येण सामान्यतः २५०० चित्राणि चित्रितानि। सः १९४१ तमे वर्षे दिवङ्गतः।

# भवन्तः जानन्ति वा ?

१. अमेरिकादेशस्य राष्ट्रियध्वजे कति रेखाः सन्ति ? ताः किं सूचयन्ति ?
२. भरतमुनिः नाट्यशास्त्रं लिखितवान् । एवं हि श्रूयते यत् 'भरतः' इत्येतस्य नाम्नः त्रीणि अक्षराणि भारतीयसङ्गीतस्य त्रीन् प्रमुखान् अंशान् ज्ञापयन्ति इति । ते अंशाः के ?
३. इटलीदेशे 'गोल्डन् एपल्' इति किं फलं निर्दिशन्ति ?
४. आंग्लभाषायाः 'कवीनां कविः' कः ?
५. 'काबूकी' नृत्यं कस्मिन् देशे व्यवहारे अस्ति ?
६. किञ्चन पुष्पसस्यम् अन्यदेशतः अस्मद्देशं प्रति आनीतम् । किन्तु तत्सस्यसन्ततिः तत्र समूलं नष्टा, अत्र च अस्ति । तत् सस्यं किम् ? स च देशः कः ?
७. १९१८ तमे वर्षे 'ऐस्ल्याण्ड्' कस्मात् देशात् विमोचनं प्राप्नोत् ?
८. इंग्लैण्ड्तः अमेरिकादेशं प्रति एकाकितया विमानयात्रां कृतवती महिला का ?
९. प्रपञ्चे एव अतिविशालं क्रैस्तमतमन्दिरं किम् ?
१०. कश्चन द्वीपः यदा रोम्साम्राज्यस्य अधीनः जातः तदा नूतनस्य राज्यस्य उदयः अभवत् । तस्य द्वीपस्य नाम किम् ? तच्च कदा प्रवृत्तम् ?
११. राज्ञः कुमारगुप्तस्य तत्पुत्रस्य स्कन्धगुप्तस्य च समकालीनः खगोलशास्त्रज्ञः कः ?
१२. यदा इंग्लैण्ड् ऐल्यर्ाण्ड् च अभिन्नदेशस्य अङ्गे आस्तां तदा काचित् राज्ञी शासनं करोति स्म । तस्याः नाम किम् ?
१३. कृष्णवर्णीयानां नायकः मार्टिन् लूथर् किंग् कस्मिन् नगरे जन्म प्राप्तवान् ?
१४. कः देशः अधिकप्रमाणेन लोहपत्रम् उत्पादयति ?
१५. अस्माकं राष्ट्रध्वजे यथा अशोकचक्रचिह्नम् अस्ति तथैव सर्वेषां देशानां राष्ट्रध्वजे अपि किमपि चिह्नं भवति एव । किन्तु आफ्रिकादेशेषु अन्यतमस्य ध्वजे तादृशं चिह्नं नास्ति । सः देशः कः ? तद्देशीयः ध्वजः कीदृशः ?

## उत्तराणि

१. त्रयोदश रेखाः । स्वातन्त्र्यात् पूर्वं ये त्रयोदश उपनिवेशाः आसन् तान् सूचयन्ति ताः ।
२. भावं रागं तालं च ।
३. टोमेटोफलम् ।
४. ऐड्मण्ड् स्पेन्सर् (१५५२ - १५९९)
५. जपान्देशे ।
६. गुल्मोहर् इति । मडगास्करदेशः ।
७. डेन्मार्कदेशतः ।
८. एमी जानसन्वर्या ।
९. बाटिकन्नगरस्थं सेण्ट् पीटर्स् बासिलिका-क्रैस्तमन्दिरम् ।
१०. सिसिली । क्रि.पू. २४१ तमे वर्षे ।
११. आर्यभटः ।
१२. अनी रानी इति ।
१३. अमेरिकास्थे अटलाण्टानगरे ।
१४. मलेशियादेशः ।
१५. लिबिया । हरितध्वजः ।



# वास्तविकः धर्मः

कस्मिंश्चित् नगरे नीलकण्ठनामकः वज्रवणिक् आसीत् । तस्य पुत्री नीरजा । नीरजायाः पितृभगिन्याः पुत्र्याः विवाहः निश्चितः कदाचित् । तदर्थं नीलकण्ठः सकुटुम्बं विवाहार्थं प्रस्थितः । पितृभगिन्याः पुत्र्याः विवाहकारणतः नीरजया ग्रामदर्शनस्य अवकाशः प्राप्तः आसीत् ।

विवाहकार्यक्रमः समाप्तः । नीलकण्ठः वधूवरौ आशिषा अनुगृह्य त्वरया भोजनं समाप्य नगरं प्रति प्रस्थितः । तदा पुत्री नीरजा पितरम् उक्तवती - "एतं ग्रामं परितः स्थितानि उद्यानानि, पर्वताश्च अतीव मनोहराणि सन्ति । एतादृशं वातावरणं मह्यम् अतीव रोचते । अतः अहं सप्ताहं यावत् अत्रैव स्थित्वा आगमिष्यामि" इति ।

तदा नीलकण्ठः किमपि वक्तुम् उद्युक्तः । तावता तद्गृहस्य द्वितीया स्नुषा कमला उक्तवती - "मातुल ! नीरजा कानिचन दिनानि अत्रैव तिष्ठतु । अत्रत्यान् रमणीयान् प्रदेशान् दर्शयित्वा अहमेव भवतः गृहं प्रापयामि एताम्" इति ।

तदा पार्श्वे एव स्थिता नीलकण्ठस्य अनुजा - "नीरजायाः निराशां मा करोतु कृपया" इति अग्रजम् उक्तवती ।

बान्धवानाम् अनुरोधं तिरस्कर्तुम् अशक्तौ नीलकण्ठः तस्य पत्नी च पुत्रीं तत्रैव परित्यज्य नगरं प्रति प्रस्थितौ ।

नीरजा तद्ग्रामस्य आम्रस्य उद्यानम् पर्वतस्थं देव्याः आलयं च अतीव इष्टवती । पितृभगिन्याः पुत्र्यः उद्याने पाटलपुष्पाणि आरोपितवत्यः आसन् । नीरजायै तानि पुष्पाणि अरोचन्त । विशेषतः तु पाटलोद्यानस्य समीपस्थात् पर्वतशिखरात् दृश्यमानं सूर्योदयदृश्यं नितराम् इष्टवती नीरजा । तत् दृश्यं द्रष्टुं सा प्रभाते एव स्नात्वा



कमलया सह पाटलोद्यानं गच्छति स्म।

कदाचित् अनारोग्यकारणात् कमला नीरजया सह न गतवती। तस्मिन् दिने नीरजा एकाकिनी एव उद्यानं गतवती। सूर्योदयदृश्यं दृष्ट्वा सा गृहं प्रति गन्तुम् उद्युक्ता। तावता सुन्दरं किञ्चन श्वेतवर्णीयं पाटलपुष्पं दृष्टं तया। तावता तस्याः पादे किमपि कण्टकं लग्नम् इव तया अनुभूतम्।

नीरजा 'हा' इति वेदनाम् अनुभवन्ती पादं दृष्टवती। तत्र बिन्दुमात्रं रक्तम् आसीत्। पार्श्वे एव कृष्णसर्पः गच्छन् गुल्मं प्रविष्टवान्।

'सर्पेण दष्टा अहम्' इति चिन्तयन्ती एव नीरजा मूर्च्छां गता।

यदा नीरजा सचेतना जाता तदा तया कुटीरसदृशे गृहे मञ्चे शयितम् आसीत्। पार्श्वे एव युवकः कश्चित् आसन्दे उपविश्य ताम् एव परीक्षादृष्ट्या पश्यन् अस्ति।

सचेतना नीरजा नेत्रे उद्घाटितवती। तदा पार्श्वे उपविष्टः युवकः तृप्त्या शिरः चालयन् - "इतःपरं भयं नास्ति। भवती कथम् अस्ति इदानीम्? शिरोभ्रमणं भवति वा?" इति पृष्टवान्। शिरश्चालनपूर्वकं 'न' इति वदन्ती नीरजा उत्थातुम् उद्युक्ता। तदा सः युवकः उक्तवान् - "इतोऽपि किञ्चित्कालं एवमेव शयनं करोतु भवती। पाटलोद्याने पतितां भवतीम् अत्र आनीय चिकित्सां कृतवान् अहम्। भवत्याः गृहे अपि एतं विषयं सूचितवान् अस्मि अहम्" इति।

तावता तत्र आगतौ नीरजायाः पितृभगिनी पितृभगिनीपतिः च सचेतनां नीरजां दृष्ट्वा अतीव सन्तुष्टौ।

नीरजायाः पितृभगिनी तस्य युवकस्य हस्तौ गृहीत्वा उक्तवती - "वत्स! अस्माकं नीरजायै पुनर्जन्म दत्तवान् अस्ति भवान्। नीरजा यदा उद्याने पतितवती तस्मिन् समये भवान् अकस्मात् तत्र आगतवान् इति तु अस्माकं सौभाग्यम्" इति।

अनन्तरं नीरजायाः पितृभगिनीपतिः तं युवकम् उक्तवान् - "इदानीं नीरजां गृहं प्रति नयामि" इति। किन्तु युवकः राजेश्वरः एतत् अनिच्छन् उक्तवान् - "अद्य एषा अत्रैव विश्रान्तिं स्वीकरोतु। यतः मम औषधतः एषा पूर्णं स्वस्था वा न वा इति मया परीक्षा करणीया अस्ति" इति।

राजेश्वरस्य एतत् वचनम् अङ्गीकृत्य नीरजायाः पितृभगिनी, तस्याः पतिः च गतवन्तौ।

अनन्तरदिने नीरजा स्वस्था जाता। सा गृहं गतवती च। तदा तस्याः पितृभगिनी राजेश्वरस्य विषयं विस्तरेण उक्तवती नीरजाम्।

राजेश्वरस्य पिता स्वकीये स्वल्पे क्षेत्रे कृषिकार्यं कुर्वन् तद्ग्रामीणानां, तं ग्रामं परितः विद्यमानानां जनानां च निःशुल्कं चिकित्सां करोति स्म। पितुः मरणानन्तरं पुत्रः अपि ताम् एव वैद्यकीयवृत्तिम् अनुवर्तयन् आसीत्।




राजेश्वरस्य आकर्षकरूपेण, सहनया, परोपकारगुणेन च नीरजा नितराम् आकृष्टा अभवत्। प्राणान् रक्षितवतः राजेश्वरस्य विषये सा अतीव आदरवती जाता।

अनन्तरदिनेषु नीरजा प्रतिदिनं सायङ्कालसमये राजेश्वरेण सह वार्तालापं कुर्वती समयं यापितवती। नगरं प्रति प्रस्थानात् पूर्वस्मिन् दिने नीरजा राजेश्वरं स्वकीयम् अभिप्रायं निवेदयन्ती - "भवान् मह्यं पुनर्जन्म दत्तवान् अस्ति। अतः भवता सह एव मम परिणयः मम कर्तव्यम् धर्मश्च इति भावयामि। एतद्विषये भवतः अभिप्रायः कः?" इति पृष्टवती।

तदा राजेश्वरः किञ्चित् विचिन्त्य - "भवत्याः कुटुम्बविषये श्रुतवान् अस्मि अहम्। भवन्तः तु धनिकाः, अहं तु दरिद्रः। अतः प्रायशः अहं भवत्याः योग्यः पतिः भवितुं न शक्नुयाम्" इति।

राजेश्वरस्य एतत् वचनं श्रुत्वा चकिता नीरजा उक्तवती - "अत्र योग्यतायाः प्रश्नः एव नास्ति। अहं मनसा भवन्तम् इष्टवती। भवान् माम् इच्छति वा न वा इति वदतु" इति।

तदा राजेश्वरः - "प्रथमं भवत्याः मातापितरौ अङ्गीकुर्यातां खलु!" इति पृष्टवान्।

तदा नीरजा - "मम मातापितरौ अहम् अङ्गीकारयामि" इत्युक्त्वा ततः निर्गतवती।

अनन्तरदिने नीरजा नगरं गत्वा प्रवृत्तं सर्वं मातापितरौ निवेद्य - "मम प्राणदाता राजेश्वरः। सः एव मम पतिः भवेत्। अहं



तम् एव परिणेष्यामि, न अन्यम्" इति स्पष्टम् उक्तवती । एकमात्रपुत्र्याः आशयं तिरस्कर्तुम् न इष्टवन्तौ मातापितरौ । विवाहविषये राजेश्वरेण सह सम्भाषणं कर्तुम् अनन्तरदिने एव गृहात् प्रस्थितः नीलकण्ठः ।

राजेश्वरेण सह सम्भाषणं समाप्य सायम् एव गृहम् प्रत्यागतः नीलकण्ठः कोपेन उक्तवान् - "नीरजायाः विवाहः राजेश्वरेण सह न भविष्यति" इति ।

पितुः एतत् वचनं श्रुत्वा नीरजा दिग्भ्रान्ता । सा पितरं किमपि प्रष्टुम् इष्टवती । किन्तु पितुः कोपात् भीता सा मौनं स्थितवती । अनन्तरं नीलकण्ठस्य पत्नी पृष्टवती - "किं प्रवृत्तम् ? किमर्थं कुपितः अस्ति भवान् ?" इति ।

तदा नीलकण्ठः उक्तवान् - "सः राजेश्वरः नगरम् आगत्य मम वाणिज्यम् एव अनुवर्तयितुं न इच्छति । सः वदति यत् ग्रामे स्थित्वा वैद्यकीयवृत्तेः अनुवर्तनम् एव मम धर्मः इति । तेन श्वशुरगृहस्य धर्मः अपि पालनीयः खलु ! मया बहुधा बोधितः चेदपि सः मम वचनं न अङ्गीकृतवान्" इति ।

पितुः एतत् वचनं श्रुत्वा नीरजा चिन्तितवती यत् राजेश्वरस्य व्यवहारः न समीचीनः इति । एतद्विषये राजेश्वरम् एव मुखतः दृष्ट्वा वार्तालापः करणीयः इति विचिन्त्य नीरजा अनन्तरदिने प्रातः एव पितृभगिन्याः ग्रामं प्रति प्रस्थिता । मध्याह्नसमये सा राजेश्वरस्य गृहं प्राप्तवती ।

राजेश्वरः तदा एव मध्याह्नभोजनं समाप्य हस्तं प्रक्षालयन् आसीत् । सः आगतां नीरजाम् उक्तवान् - "आतपे एव आगता भवती अतीव श्रान्ता स्यात् । उपविशतु । क्षणाभ्यन्तरे पाकं करोमि" इति ।

किन्तु नीरजा कोपस्य निग्रहणं कुर्वती उक्तवती - "अहं पितृभगिन्याः गृहं गत्वा भोजनं कृत्वा एव आगतवती अस्मि । भवता सह वार्तालापः करणीयः अस्ति । तदर्थम् आगतवती अहम्" इति ।

"भवतु । वदतु, कः विशेषः ?" इति पृष्टवान् राजेश्वरः ।

तदा नीरजा - "धर्मविषये बहुधा बोधयित्वा मम पितरं प्रेषितवान् खलु भवान् ! परम्परागतायाः पितुः

वैद्यकीयवृत्तेः अनुवर्तनं पुत्रस्य भवतः धर्मः यथा, तथा पितुः वाणिज्यं सम्यक् प्रचलेत् इति पुत्र्याः आशयः अपि धर्मः एव खलु ! धर्मस्य अनुसरणे स्त्रीपुरुषयोः भेदः किमर्थम् ?'' इति पृष्टवती कोपेन। राजेश्वरः नीरजायाः वचनं श्रुत्वा पार्श्वस्थायाम् उत्पीठिकायां विद्यमानान् आम्रफलस्य खण्डान् दर्शयन् मन्दहासपूर्वकम् उक्तवान् - ''प्रथमं मधुरम् आम्रफलं खादतु । तेन भवत्याः कोपः शान्तः भविष्यति'' इति।

तदा नीरजा - ''प्रथमं मम प्रश्नस्य उत्तरं वदतु'' इति उक्तवती क्रोधेन।

तावता मार्गे गच्छन् कश्चित् भिक्षुकः दैन्येन पृष्टवान् - ''बुभुक्षितः अस्मि। कृपया किञ्चित् अन्नं ददातु अम्ब'' इति।

राजेश्वरः अनुक्षणं आम्रखण्डान् नीत्वा भिक्षुकाय दत्तवान् । अन्तः आगत्य ताम् उक्तवान् - ''भवती पूर्णोदरा अस्ति । सः भिक्षुकः बुभुक्षया पीडितः अस्ति । अतः एतत् फलं भिक्षुकाय दीयते चेत् सः धर्मः। एवम् एव आवयोः विषये अपि। नगरे बहवः वणिजः भवन्ति । यदि भवत्याः पितुः वाणिज्यं स्थगितं भविष्यति, तर्हि अपि न कस्यापि हानिः भविष्यति। अहं यदि एतां वैद्यकीयवृत्तिं स्थगयामि, तर्हि अस्य ग्रामस्य महती हानिः एव। अन्यः कोऽपि वैद्यकीयं कर्तुम् एतं ग्रामं प्रति न आगमिष्यति । स्वार्थचिन्तनं विना परहितचिन्तनम् एव धर्मः । अत्र स्त्रीपुरुषयोः न कोऽपि भेदः अस्ति'' इति।

एतत् श्रुत्वा जीवितोद्देशं सम्यक् ज्ञातवती नीरजा मौनं ततः निर्गन्तुम् उद्युक्ता।

तदा राजेश्वरः आश्चर्येण पृष्टवान् - ''किम् एतत् ? विना वचनं गन्तुम् उद्युक्ता खलु भवती ?'' इति।

''भवतः धर्मोपदेशस्य श्रवणस्य अनन्तरं मम पितुः प्रतिनिधित्वेन समर्थनीयं किमपि नावशिष्टम्। अतः अहं निर्गन्तुम् उद्युक्ता। अन्यच्च वयं खलु वधूपक्षीयाः। विवाहसन्दर्भे वधूपक्षीयैः करणीयानि कार्याणि बहूनि । अतः अविलम्बेन गन्तव्यं मया'' इति लज्जामिश्रितेन स्वरेण उक्तवती नीरजा।





# सम्भाषणसमर्थः शुकः

महादेवपुरनामके ग्रामे राजशेखरः एव महान् कृषिकः आसीत् । तस्य विशाला भूमिः आसीत् । 'अहमेव धनिकः । अहम् एव बुद्धिमान् । मत्समः अस्मिन् ग्रामे न कोऽपि अस्ति' इति चिन्तयन् राजशेखरः अतीव गर्वितः आसीत् ।

आपणेषु वा भवतु, यत्र कुत्रापि वा भवतु, नूतनं किमपि वस्तु दृष्टं चेत् राजशेखरः तत् क्रीणाति स्म एव । 'मम गृहे अपूर्वाणि अमूल्यानि च वस्तूनि सन्ति । तादृशानि वस्तूनि भूस्वामिनः गृहे अपि न सन्ति' इति सगर्वं सर्वान् वदति स्म राजशेखरः ।

कदाचित् कश्चित् सम्भाषणावसरे राजशेखरम् - ''अस्मद्ग्रामीणस्य गोविन्दस्य गृहे शिक्षितः शुकः अस्ति इति श्रुतवान् अहम् । भवान् जानाति वा एतं विषयम् ?'' इति पृष्टवान् ।

तदा राजशेखरः आश्चर्यम् अनुभवन् अपि निर्विकारभावेन उक्तवान् - ''अस्मिन् कालेऽपि एतादृशवार्तायां विश्वसितुं न मूढः अहम्'' इति ।

तदा तत्रैव पार्श्वे स्थितः अन्यः कश्चित् राजशेखरम् उक्तवान् - ''भवान् कदाचित् गोविन्दस्य गृहं गत्वा आगच्छतु । अयं विषयः विश्वसनीयः उत न इति तत्र ज्ञास्यति भवान्'' इति ।

राजशेखरः वेत्रं गृहीत्वा अनुक्षणं गोविन्दस्य गृहं प्रति प्रस्थितवान् । राजशेखरः यदा गोविन्दस्य गृहं गतवान् तस्मिन् समये गोविन्दः गृहस्य पृष्ठभागे उद्याने किमपि कार्यं कुर्वन् आसीत् । अतः एव राजशेखरेण आहूतं चेदपि गोविन्देन न श्रुतम् ।

'इदानीं किम् करोमि ? अस्मिन् गृहे कोऽपि न दृश्यते खलु !' इति यावत् चिन्तयन्

आसीत् राजशेखरः, तावता - "कृपया अन्तः आगच्छतु । गृहस्य स्वामी गोविन्दः गृहे एव अस्ति" इति वचनं श्रुतम्।

न कोऽपि मनुष्यः दृष्टः तत्र, किन्तु वचनानि तु श्रुतानि । अतः राजशेखरः परितः सर्वत्र परिशीलितवान् । तत्र भित्तिपार्श्वे पञ्जरे कश्चित् शुकः आसीत् । राजशेखरं दृष्ट्वा शुकः पुनरपि तानि एव वचनानि अवदत् । गौरवपूर्वकं स्वागतं कृतवान् शुकः इति ज्ञात्वा नितरां चकितः राजशेखरः।

तावति काले गोविन्दः बहिः आगत्य राजशेखरं दृष्ट्वा - "कथं मम गृहं प्रति चिरात् आगमनं भवतः ?" इति पृष्टवान्।

राजशेखरः स्वकीयस्य आगमनस्य कारणं वक्तुम् अनिच्छन् - "एवमेव क्षेत्रं प्रति प्रस्थितवान्। मध्येमार्गं भवतः गृहतः नूतनः स्वरः श्रुतः। किम् इति ज्ञातुम् इच्छन् अत्र आगतवान् अहम् । शुकस्य स्वरः इति ज्ञातवान् इदानीम्। भवान् कुतः आनीतवान् एतं शुकम् ?" इति पृष्टवान्।

तदा गोविन्दः उक्तवान् - "कश्चित् व्याधः पञ्जरस्थम् एतं शुकं स्कन्धे आरोप्य गच्छन् आसीत् मार्गे। पञ्च रूप्यकाणि दत्त्वा व्याधतः एतं शुकं क्रीतवान् अहम्। पक्षिणां शिक्षणदाने किञ्चित् अनुभवः अस्ति मम। तादृशस्य अनुभवस्य उपयोगं कर्तुम् इच्छन् एतं शुकं पाठितवान् अहम्। इदानीम् एषः शुकः गौरवदानम्, स्वागतीकरणम्, सम्भाषणं, गीतं च जानाति" इति।



एतत् श्रुत्वा - "एवं वा ? एतादृशाः शुकाः अतीव विरलतया लभ्यन्ते। एतं शुकं क्रेतुम् इच्छामि अहम्। भवान् अपरं शुकम् आनीय शिक्षणं दातुं शक्नोति। अतः एतं मह्यं ददातु" इति उक्तवान् राजशेखरः।

गोविन्दः शुकं विक्रेतुं सर्वथा न इच्छति। किन्तु राजशेखरः पुनः पुनः साग्रहं यदा प्रार्थितवान् तदा तस्मिन् करुणा उत्पन्ना। सः धनं स्वीकृत्य शुकं राजशेखराय दत्तवान्। राजशेखरः शुकं गृहीत्वा गृहं गतवान्।

सप्ताहाभ्यन्तरे एव राजशेखरः गोविन्दस्य गृहम् आगत्य कोपेन उक्तवान् - "कीदृशः दुर्व्यवहारः एतस्य शुकस्य ! एषः दिनद्वयं यावत् सादरं सम्भाषणम् अकरोत् । अनन्तरदिनतः एतस्य व्यवहारः एव

परिवृत्तः । अगौरवसूचकानि सर्वाणि वचनानि रटति एषः। महिलां दृष्ट्वा 'विधवे' इति सम्बोधयति । मम स्नेहितान् 'शनिग्रहाः' इति वदति । बान्धवाः गृहम् आगच्छन्ति चेत् 'भवताम् अन्त्यसंस्कारः कदा भविष्यति ?' इति पृच्छति" इति।

तदा "शुककारणतः मयि कोपकरणेन न किमपि प्रयोजनम्। एतद्विषये अहं किं कर्तुं शक्नोमि ?" इति पृष्टवान् गोविन्दः।

एतत् श्रुत्वा राजशेखरः उक्तवान् - "भवतः शुकं भवान् स्वीकृत्य मदीयं धनं प्रत्यर्पयतु" इति।

तदा "भोः ! सर्वथा न शक्यते। भवान् स्वेच्छया एव शुकं क्रीतवान् । गृहस्य वातावरणानुगुणं संस्कारानुगुणं च शुकः भाषते । इदानीम् एषः शुकः भवतः गृहे स्थित्वा अनादरसूचकानि वचनानि अभ्यस्तवान्। एतादृशं शुकं स्वीकृत्य अहं किं करोमि ? तं शुकं त्यजतु। सः स्वेच्छया यत्र कुत्रापि गच्छतु" इति उक्तवान् गोविन्दः।

एतत् श्रुत्वा राजशेखरः प्रत्युत्तरं किमपि अवदन् पञ्जरतः शुकं मोचितवान्। अनन्तरं पञ्जरं तत्रैव क्षिप्त्वा ततः वेगेन गतवान्।

किञ्चित्कालानन्तरं गोविन्दस्य पत्नी आगत्य पतिम् उक्तवती - "सः शुकः पुनः गृहस्य पृष्ठभागतः आगत्य गृहं प्रविष्टवान् अस्ति। सः विना कारणं मां तर्जयति। मया बहुधा निवारितः सः। तथापि न गच्छति" इति।

एतत् श्रुत्वा गोविन्दः उक्तवान् - "अत्र शुकस्य दोषः कोऽपि नास्ति। सः तु अस्माकं देवता । दिनचतुष्टये एकवारं सः यावत् इच्छति तावत् वातामफलं दातव्यम् । न दीयते चेत् कुपितः भवति शुकः। तदा सः तर्जयितुम् आरभते । एतत् रहस्यं व्याधेन उक्तम्। किन्तु एतद्विषये राजशेखरस्य समीपे न उक्तम् आसीत् मया" इति।

"भवतु। इदानीं किं करणीयं मया ?" इति पृष्टवती गोविन्दस्य पत्नी।

"खादितुं किञ्चित् धान्यं ददातु । अपरक्षणे एव सः शुकः सादरं भाषते" इति पत्नीम् उक्तवान् गोविन्दः।






द्वापरयुगे कृष्णः यदुवंशे जन्म प्राप्य लोककण्टकान् दुष्टान् कंसादीन् संहृत्य प्रजानां सुखदुःखं विचारयन् द्वारकानगरे अष्टराज्ञीभिः सह विराजते स्म। तस्मिन् समये कृष्णस्य अग्रजः बलरामः यादवानां प्रमुखत्वेन स्थित्वा राज्यपालनं कुर्वन् आसीत्।

कृष्णः सत्यभामया सह गत्वा नरकासुरस्य संहारं कृतवान् । सत्यभामा अपि युद्धे कृष्णस्य साहाय्यं कृतवती। तस्मात् दिनात् आरभ्य सत्यभामा सगर्वं चिन्तयति स्म यत् कृष्णस्य अष्टराज्ञीषु अहम् एव श्रेष्ठा इति।

नारदः कदाचित् देवलोकतः पारिजातपुष्पम् आनीय रुक्मिण्यै दत्तवान्।

'वस्तुतः कृष्णस्य पत्नी अहम् एव। एवं स्थिते अपूर्वं पारिजातपुष्पं सपत्न्यै रुक्मिण्यै दत्तं नारदेन' इति ज्ञात्वा सत्यभामा नितरां कुपिता।

सत्यभामायाः कोपं शमयितुम् इच्छन् कृष्णः गरुडवाहनेन तां देवलोकं नीत्वा पारिजातवृक्षम् एव उत्पाट्य गच्छन् आसीत् । तदा इन्द्रः स्वकीयं वज्रायुधं गरुडस्य उपरि क्षिप्तवान् । तदा गरुडः स्वपक्षाभ्यां वज्रायुधं निगृह्णन् तत्रैव स्थगितवान्। तदारभ्य गरुडः 'अहं बलवान्' इति चिन्तयन् गर्वेण व्यवहरति स्म । सत्यभामा अपि पारिजातवृक्षं गृहस्य पुरतः उद्याने वर्धयन्ती आत्मानम् एव श्रेष्ठं मन्यमाना गर्वम् अनुभवति स्म।

४६. कृष्णाञ्जनेययोः युद्धम्



बलरामः महाबलान् अनेकान् दुष्टान्, नरकासुरस्य प्राणमित्रं भयङ्करं पुच्छरहितं द्विवदनामकं नरवानरं स्वकीयेन हलायुधेन संहृतवान् । एतेन बलरामः अपि स्वकीयं पराक्रमम् एव श्रेष्ठं मन्यमानः गर्वितः जातः ।

सत्यभामायाः गरुडस्य बलरामस्य च गर्वः दिने दिने वर्धमानः एव आसीत् । एतत् ज्ञात्वा कृष्णः तान् विवेकं बोधयितुं समयं प्रतीक्षमाणः आसीत् ।

कदाचित् गरुडः सर्पशिशुं कञ्चित् गृहीतुम् उद्युक्तः । तावता तस्य सर्पशिशोः माता काञ्चनानामिका सर्पिणी धावन्ती आगत्य शिशुम् उन्नीय नीतवती । गरुडः अपि ताम् अनुसृतवान् । 'रक्षन्तु । रक्षन्तु' इति प्रार्थयन्ती काञ्चना धावन्ती आसीत् मार्गे । तदा तस्याः अभिमुखं त्रिलोकसञ्चारी नारदः आगतवान् । सः काञ्चनाम् उक्तवान् - "रामनाम जपन्ती हनूमन्तं शरणं गच्छतु । हनूमान् गन्धमादनपर्वते तपः आचरन् अस्ति । भवतीं रक्षितुं सः एव समर्थः । शीघ्रं गच्छतु" इति ।

काञ्चना ततः गन्धमादनपर्वतं गत्वा शिशुं हनूमतः पादयोः पुरतः संस्थाप्य - "राम ! राम ! रक्षतु" इति वदन्ती हनूमन्तं नमस्कृतवती ।

तदा हनूमान् नेत्रे उन्मील्य ताम् उक्तवान् - "मम आश्रमे निर्भयेन तिष्ठतु" इति ।

तावता गरुडः काञ्चनाम् अनुसरन् हनूमतः समीपम् आगतवान् ।

गरुडं दृष्ट्वा हनूमान् उक्तवान् - "हे पक्षीन्द्र ! भवतः बुभुक्षा अस्ति चेत् माम् एव खादतु" इति ।

"सर्पः एव मम आहारः, न तु वानरः" इति वदन् गरुडः काञ्चनां तस्याः शिशुं च ग्रहीतुम् उद्युक्तः । तदा हनूमान् स्वपुच्छेन गरुडस्य पक्षौ बद्ध्वा वेगेन तम् आकाशे क्षिप्तवान् । हनूमता क्षिप्तः गरुडः द्वारकानगरे बलरामस्य पुरतः पतितः ।

काञ्चना हनूमन्तं नमस्कृत्य पुत्रेण सह नागलोके स्थितस्य अग्रजस्य वासुकेः समीपं गतवती ।

हनूमतः कारणतः गरुडस्य अपमाननं जातम् इति श्रुत्वा बलरामः गरुडम्

उक्तवान् - "गरुड ! चिन्तां मा करोतु । अहं विचारयिष्यामि हनूमन्तम् । बलरामः आह्वयति इति गत्वा तं वदतु" इति ।

गरुडः भयेन एव हनूमतः समीपं गत्वा उक्तवान् - 'बलरामः भवन्तम् आह्वयति' इति । हनूमान् गरुडस्य वचनं न लक्षितवान् एव । तदा गरुडः स्वपक्षौ वेगेन कम्पयन् चञ्च्वा हनूमन्तं घातयितुम् उद्युक्तः । किन्तु किञ्चित्पूर्वं जातं स्वपराभवं स्मृत्वा गरुडः भीतः । 'हनूमान् कोपेन पुनरपि माम् उन्नीय आकाशे क्षिपति चेत् का गतिः मम ? अतः अत्र स्थित्वा वृथा कालयापनापेक्षया गत्वा विषयं बलरामम् एव निवदयामि' इति चिन्तयन् गरुडः ततः प्रतिगतवान् ।



अनन्तरं गरुडः बलरामसमीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् । तस्मिन् समये कृष्णः बलरामसमीपे किमपि सम्भाषणं कर्तुं तत्र आगतः आसीत् । सः गरुडेन उक्तं श्रुत्वा - 'गच्छतु । रामः एव भवन्तम् आह्वयन् अस्ति इति हनूमन्तं वदतु' इत्युक्त्वा गरुडं प्रेषितवान् ।

गरुडः पुनरपि हनूमतः समीपं गत्वा 'रामः आह्वयति भवन्तम् । शीघ्रम् आगच्छतु' इत्युक्तवान् ।

एतत् श्रुत्वा हनूमान् अनुक्षणं गरुडेन सह द्वारकां गत्वा "राम ! राम !" इति आहूतवान् ।

तदा बलरामः सगर्वम् उत्थाय हनूमतः समीपं गत्वा - "अहं न रामः, अपि तु बलरामः । 'बलरामाय नमः' इति त्रिवारं भवान् वदति चेत् एव अहं भवन्तं क्षन्तुं शक्नुयाम्" इति उक्तवान् ।

एतत् श्रुत्वा अतीव कुपितः हनूमान् - "किम् ? भवान् बलरामः वा ? अबलरामः वा ?" इति दन्तप्रदर्शनं कुर्वन् उपहासपूर्वकं पृष्टवान् ।

हनूमतः वचनेन अपमानितः बलरामः स्वकीयं हलायुधं हनूमतः उपरि पातयितुम् उद्युक्तः ।

तदा हनूमान् स्वपुच्छेन तत् आयुधं पुटीकृत्य क्षिप्तवान् । बलरामः पुनः हनूमन्तं ताडयितुं समीपम् आगतवान् । तदा हनूमान् बलरामस्य हस्तौ दृढं गृहीत्वा उन्नीतवान् । एतत् सोढुम् अशक्तः बलरामः मूर्च्छितः, तत्रैव पतितः च ।



बलरामः मूर्च्छावस्थायां पूर्वतनवृत्तान्तं स्मृतवान्।

रामस्य पट्टाभिषेकः यदा समाप्तः तदा लक्ष्मणः उच्चैः हसितवान्।

सभायाम् उपविष्टाः सर्वे अपि 'लक्ष्मणः अस्मान् एव उपहसितवान्' इति विचिन्त्य अवनताः जाताः। एतत् ज्ञात्वा रामः लक्ष्मणं ताडयितुम् उद्युक्तः । तदा हनूमान् अग्रे आगत्य रामं निवारितवान् । अनन्तरं हनूमान् लक्ष्मणं पृष्ट्वा हासस्य कारणं ज्ञात्वा सभासदः उक्तवान् - "वनवाससमये सीतारामयोः रक्षणं कुर्वन् लक्ष्मणः चतुर्दश वर्षाणि यावत् निद्राहारादिकं परित्यज्य निद्रां सूचितवान् आसीत् यत् रामस्य पट्टाभिषेकानन्तरम् आगच्छतु इति । लक्ष्मणस्य परतया तस्य पत्नी ऊर्मिला एव निद्रां करोति स्म । चतुर्दश वर्षाणि निद्राहारादिकं विना कठोरम् उपवासं यः कृतवान्, तेन एव इन्द्रजितः मरणम् इति विधिलिखितम् आसीत् । तस्मात् रामस्य पट्टाभिषेकानन्तरं क्षणमपि विलम्बम् अकुर्वती निद्रा अनुक्षणम् आगता । तदर्थं लक्ष्मणः उच्चैः हसितवान्" इति।

हनूमतः एतत् वचनं श्रुत्वा रामः लक्ष्मणं - "वनवाससमये अहं कदाचित् खादितुं भवते एकं कदलीफलं दत्तवान् आसम् । तत् किं कृतवान् ? न खादितवान् वा भवान् ?" इति पृष्टवान्।

तदा लक्ष्मणः लवित्रेण स्वकीयम् ऊरुं, कर्तयित्वा तत्र विद्यमानं कदलीफलं निष्कास्य - "अग्रजेन प्रीत्या दत्तं कदलीफलं रामप्रसादः इति कारणतः शरीरे गोपितवान् आसम् । इदानीं मम उपवासव्रतं समापयन् अस्मि" इति वदन् तत् फलं खादितवान्।

एतत् दृष्ट्वा रामः लक्ष्मणम् आलिङ्ग्य "वत्स ! आगामिजन्मनि अहं भवतः अनुजः भूत्वा ऋणमुक्तः भविष्यामि" इति उक्तवान्।

बलरामः मूर्च्छावस्थायां ज्ञातवान् यत् अहम् एव लक्ष्मणः इति । सः मूर्च्छातः उत्थाय हनूमन्तं - "सञ्जीव ! पूर्वं भवान् सञ्जीविनीम् आनीय माम् उज्जीवितवान् आसीत् । इदानीं मूर्च्छावस्थायाम् एव अहं विवेकं यथा प्राप्नुयां, तथा कृतवान् । आगच्छतु । रामं पश्याव" इति वदन् तं

कृष्णसमीपं नीतवान्।

कृष्णः हनूमन्तं दृष्ट्वा - "मुष्टिं प्रदर्शयन् मम अग्रजं बलरामम् एव तिरस्करोति वा भवान् ? कियत् धैर्यं भवतः ?" इति वदन् तं मुष्टियुद्धार्थम् आहूतवान्। अनन्तरं तयोः युद्धम् आरब्धम्।

कृष्णाञ्जनेययोः युद्धं बहुकालं यावत् प्राचलत्।

आत्मना सह युद्धं कुर्वन्तं कृष्णम् आत्मनि एव प्रशंसन् हनूमान् बलेन मुष्टिप्रहारं कृतवान्। तेन कृष्णः अधः पतितवान्। आयासेन विजयोत्साहेन च रममाणस्य हनूमतः उपरि कृष्णः झटिति आक्रमणं कृत्वा उरसि बलेन मुष्टिप्रहारं कृतवान्। तस्मिन् समये हनूमतः शरीरे कृष्णस्य पादस्पर्शः जातः।

कृष्णस्य पादस्पर्शेन हनूमान् ज्ञातवान् यत् रामः एव कृष्णरूपेण अवतारं कृतवान् इति। पूर्वं लङ्कायां रामः सीतां कठोरम् उक्तवान् आसीत् 'अग्निप्रवेशं करोतु' इति। तदा सीता दुःखेन अश्रूणि स्रावयन्ती आसीत्। तां घटनां स्मरन् कुपितः हनूमान् मुष्टिं प्रदर्शयन् उक्तवान् - "राम ! मया सह युद्धं करोतु" इति।

तदा रामः मन्दहासपूर्वकम् उक्तवान् - "हनूमन् ! इदानीं भवता सह युद्धं कर्तुम् अशक्तः अहम्। अग्रिमकाले कदाचित् भवता सह युद्धं कृत्वा भवतः आशां पूरयिष्यामि" इति।

हनूमान् तं सन्दर्भम् ऊहितवान्। सः रामं नमस्कुर्वन् - "राम ! भवान् रामरूपम् एव प्रदर्श्य कृपया माम् अनुगृह्णातु" इति भक्त्या





प्रार्थितवान्।

तदा रामः - "क्षणं तिष्ठतु । लक्ष्मणः अत्रैव अस्ति । सीता अपि आगच्छतु" इत्युक्त्वा सत्यभामाम् आह्वातुं कश्चित् प्रेषितवान्।

सत्यभामा प्रतिजन्म अपि अहम् एव कृष्णस्य पत्नी इति सगर्वं चिन्तयन्ती आसीत्। सा कृष्णस्य आह्वानं श्रुत्वा ततोऽपि गर्विता - 'सीता यथा अलङ्कारं करोति तथा आत्मानम् अलङ्कृत्य आगमिष्यामि । अतः किञ्चित् विलम्बः भवति इति वदतु कृष्णम्' इत्युक्त्वा प्रेषितवती। अनन्तरम् आत्मानम् अलङ्कर्तुम् आरब्धवती । अशोकवने सीता यथा निरालङ्कारा आसीत्, तादृशं वेषं न सर्वथा इष्टवती सत्यभामा । सा पट्टाभिषेककार्यक्रमानुगुणम् अलङ्कृतवती । बहूनि आभरणानि धृत्वा कौशेयशाटिकां धृतवती । शिरसि पारिजातपुष्पं धृत्वा 'इदानीम् अहं साक्षात् सीता इव सुन्दरी अस्मि' इति सगर्वं चिन्तयन्ती आगत्य कृष्णस्य पार्श्वे स्थितवती।

हनूमान् सत्यभामां दृष्ट्वा उक्तवान् - "मातः ! भवती चन्द्रसेना खलु ! कृष्णावतारसमये रामः उक्तवान् आसीत् यत् चन्द्रसेनाम् अपि अष्टराज्ञीषु अन्यतमात्वेन स्वीकरिष्यामि इति । तत् वचनं पालितवान् अस्ति रामः । वस्तुतः भवती धन्या" इति।

एतेन वचनेन सत्यभामा पूर्ववृत्तान्तं स्मृतवती। तदा सा गर्वं परित्यज्य रुक्मिण्याः समीपं गत्वा - "भगिनि ! रामस्य प्रियपत्नी सीता भवती आगत्य हनूमन्तम् अनुगृह्णातु" इति सविनयं प्रार्थितवती।

रुक्मिणी सीतारूपेण आगतवती। कृष्णः कोदण्डरामरूपेण हनूमन्तम् आशिषा अनुगृहीतवान्।

बलरामः लक्ष्मणरूपेण रामस्य पार्श्वे सविनयं स्थितवान्। हनूमान् रामस्य पादौ एव पश्यन् भक्त्या नमस्कुर्वन् ब्रह्मानन्दे लीनः जातः।

रामावतारम् उपसंहृत्य कृष्णः हनूमन्तं जागरयन् उक्तवान् - "हनूमन्! भवान् गत्वा हिमालयसमीपस्थे कदलीवने तिष्ठतु । तत्र भवतः अनुजः वायुकुमारः भीमः आगमिष्यति । गदायुद्धस्य मल्लयुद्धस्य च

सूक्ष्मान् विषयान् तं बोधयतु भवान्" इति।

सत्यभामा हनूमतः समीपम् आगत्य - "मम रामस्य च मेलनं कारयित्वा भवान् मम सौभाग्यस्य कारणीभूतः जातः। अतः अहं कृतज्ञा अस्मि" इति वदन्ती तं नमस्कृतवती।

हनूमान् अपि सत्यभामां नमस्कुर्वन् उक्तवान् - "भवती नाम्ना सत्यभामा। 'देवः सदा अपि सत्यम् एव शरणं गच्छति' इति वचनं स्पष्टीकुर्वन् कृष्णः भवतीं परिणीय भवत्याः आशाः पूरितवान्। 'सत्यपतिः' इति नाम अपि प्राप्तवान्। वस्तुतः भवती भाग्यशालिनी। भवती सीतासमाना" इति।

हनूमतः वचनेन नितरां सन्तुष्टा सत्यभामा - "अद्य अहं भवतः सकाशात् सत्यं ज्ञातवती, गर्वं च त्यक्तवती" इति उक्तवती।

हनूमान् रुक्मिणीं कृष्णं च नमस्कृत्य गन्तुम् उद्युक्तः।

तदा बलरामः हनूमन्तं प्रीत्या आलिङ्ग्य "सञ्जीविन्! भवतः कारणात् आत्मानं ज्ञातवान् अहम्। अहङ्कारं परित्यजामि। धन्यवादाः" इति उक्तवान्।

गरुडः हनूमन्तं नमस्कृत्य - "वीरहनुमन्! क्षीरसागरे महाविष्णोः सन्निधाने मया सह भवान् अपि तिष्ठति इति महाविष्णुना उक्तम् आसीत्। तत् इदानीं स्मरामि अहम्" इति वदन् हनूमता सह कदलीवनपर्यन्तम् अपि गतवान्।

कदलीवनम् उन्नतैः कदलीवृक्षैः विविधैः फलवृक्षैः च पूर्णं सत् आह्लादकरम् आसीत्। हिमशिखरतः प्रवहन्ती जलधारा रजतम् इव भासते स्म।

हनूमान् कदलीवनं प्रविश्य वृद्धवानररूपेण कस्यचित् कदलीवृक्षस्य मूलम् अवलम्ब्य उपविष्टवान्। तस्य पुच्छं वक्रतां विना मार्गस्य अवरोधपूर्वकं शयनम् अकरोत्। समीपे एव गदा अपि अस्ति।

अनन्तरं हनूमान् नेत्रे निमील्य भक्त्या राममेव ध्यायन् रामनाम जपितुम् आरब्धवान्।





# व्याधेः चिकित्सा

कुबेरपुरे नागराजनामकः धनिकः आसीत् । तस्य प्रभूता सम्पत्तिः आसीत् । किन्तु तस्य आरोग्यं सम्यक् नास्ति । महान्तः वैद्याः अपि तस्य अनारोग्यस्य कारणम् ज्ञातुम् अशक्ताः उक्तवन्तः - "सर्वविधस्य अपि औषधस्य उपयोगः कृतः अस्माभिः । किन्तु किमपि प्रयोजनं न जातम् । भवतः रोगः अस्माभिः शमयितुं न शक्यः" इति ।

तेषु एव दिनेषु योगानन्दनामकः संन्यासी कश्चित् कुबेरपुरम् आगतवान् । ग्रामस्य समीपस्थे आश्रमे स्थितवान् सः । योगानन्दः योगविद्यया अपूर्वाः शक्तीः सम्पादितवान् अस्ति, बहूनां रोगनिवारणम् अपि कृतवान् अस्ति इति ज्ञात्वा नागराजः पत्न्या सह योगानन्दसमीपं गतवान् । स्वस्य अनारोग्यं निवेदितवान् च ।

नागराजस्य वृत्तान्तं समग्रं श्रुत्वा योगानन्दः तं पृष्टवान् - "भवतः शत्रवः केऽपि सन्ति वा अस्मिन् ग्रामे ?" इति ।

तदा नागराजः 'अहं मम रोगविषये पृष्टवान् । किन्तु एषः शत्रूणां विषये किमर्थं पृच्छति ?' इति चिन्तयन् साश्चर्यं पृष्टवान् - "मम शत्रवः बहवः सन्ति अस्मिन् ग्रामे । अहं धनिकः इति सर्वेषाम् अपि मद्विषये असूया । मम विरोधिनः एव मद्विषये मन्त्र-तन्त्रादिकं किमपि कारितवन्तः स्युः वा ?" इति ।

नागराजस्य एतत् वचनं श्रुत्वा संन्यासी मन्दं विहस्य मौनं स्थितवान् ।

पतिः अनावश्यकान् विषयान् वदति इति ज्ञात्वा नागराजस्य पत्नी संन्यासिनं सविनयम् उक्तवती - "एतेषु दिनेषु मम पत्युः मनस्स्थितिः सम्यक् नास्ति । जनैः सह कथं व्यवहरणीयम् इत्यपि न जानाति सः । अतः भवान् यत् प्रष्टुम् इच्छति तत् मां




स्वामिन् ! तेषां स्मरणेनैव मम मानसिकः क्लेशः वर्धते । पार्श्वग्रामे एव मम दायादाः सन्ति । 'नागराजः तस्य पत्नी च कदा वा मरणं प्राप्नुतः, कदा वा वयं नागराजस्य भूमिं स्वायत्तीकुर्याम' इति चिन्तयन्तः सन्ति मम दायादाः । भूकम्पतः वा प्रलयकारणतः वा ते सर्वे नाशं प्राप्नुवन्ति चेत् मम मनसः शान्तिः लभ्यते'' इति उक्तवान् नागराजः ।

नागराजस्य एतत् वचनं श्रुत्वा संन्यासी क्षणकालं विचिन्त्य नागराजम् उक्तवान् - ''भवन्तौ उभौ अपि कानिचन दिनानि तीर्थयात्रां कृत्वा आगच्छताम् । तदा अपि भवतः व्याधिः न शान्तः चेत् तदा अहम् औषधं दास्यामि'' इति ।

तदा नागराजः - ''रोगकारणतः अहम् इदानीम् एव अतीव निश्शक्तः अस्मि । तादृशः अहं कथं वा तीर्थयात्रां कर्तुं शक्नुयाम् ?'' इति पृष्टवान् ।

एतत् श्रुत्वा संन्यासी किञ्चित् औषधं नागराजाय यच्छन् उक्तवान् - ''प्रतिदिनं रात्रौ शयनतः पूर्वं एकचमसपरिमितम् औषधं जले योजयित्वा पिबतु । एतेन भवतः शक्तिः वर्धते'' इति ।

नागराजः संन्यासिनः वचनम् अङ्गीकृत्य ततः गतवान् ।

अनन्तरं नागराजः तस्य पत्नी च तीर्थयात्रार्थं गृहात् प्रस्थितवन्तौ । काशी-रामेश्वर-श्रीशैलादीनां दर्शनं समाप्य षण्मासानन्तरं कुबेरपुरम् प्रत्यागतवन्तौ नागराजः तस्य पत्नी च । तीर्थयात्रासमये

पृच्छतु । अहं वदामि'' इति ।

तदा - ''चिन्ता नास्ति । भवत्याः पतिः एव मम प्रश्नानाम् उत्तरं वदतु'' इत्युक्त्वा संन्यासी नागराजम् पृष्टवान् - ''भवतः प्रतिवेशिनः कथं सन्ति ?'' इति ।

तदा नागराजः उक्तवान् - ''स्वामिन् ! प्रतिवेशिनां विषये किमिति वदामि ? सर्वे अपि दुष्टाः एव । एतावत्पर्यन्तम् अस्मिन् कुबेरपुरे मदीयं भवनम् एव बृहत् आसीत् । किन्तु सद्यःकाले कुतश्चित् आगतः वस्त्रवणिक् सीतापतिः वाणिज्ये प्रभूतं धनं सम्पाद्य अट्टद्वयात्मकं बृहत् भवनं निर्माय सगर्वम् अटति'' इति ।

''भवतः बान्धवाः सन्ति वा ?'' इति पृष्टवान् संन्यासी । ''बान्धवाः सन्ति

षण्मासान् अपि यावत् नागराजः स्वस्थः एव आसीत् । एतदभ्यन्तरे योगानन्दः उत्तरदेशं गतवान् आसीत् ।

तीर्थयात्रासमये किमपि अनारोग्यं नासीत् इति कारणतः 'अहं स्वस्थः' इति चिन्तयन् नागराजः सन्तोषेण आसीत् । किन्तु तीर्थयात्रातः प्रत्यागमनानन्तरं मासाभ्यन्तरे एव नागराजः पुनरपि अस्वस्थः जातः । संन्यासिना दत्तम् औषधम् अपि समाप्तम् आसीत् । एकमासानन्तरं योगानन्दः प्रवासं समाप्य पुनः कुबेरपुरम् आगतवान् । योगानन्दस्य आगमनवार्तां श्रुत्वा नागराजः पत्न्या सह तस्य दर्शनार्थं गतवान् ।

आगतं नागराजं दृष्ट्वा योगानन्दः - ''तीर्थयात्रा कथम् आसीत् ? भवान् इदानीं कुशली वा ?'' इति तस्य कुशलादिकं पृष्टवान् ।

तदा नागराजः - ''किमिति वदामि स्वामिन् ! तीर्थयात्रासमये अहं स्वस्थः आसम् । किन्तु यदा अहं ग्रामं प्रत्यागतः तदा पुनरपि मम रोगः पिशाचवत् पीडयन् अस्ति । भवता दत्तम् औषधम् अपि समाप्तम् । वर्षस्य यावत् आवश्यकं, तावत् औषधं पुनरपि भवान् ददाति चेत् मम उपकाराय भवेत्'' इति प्रार्थितवान् ।

एतत् श्रुत्वा योगानन्दः उक्तवान् - ''तत् औषधं भवान् गृहे एव सज्जीकर्तुं शक्नोति । औषधकरणक्रमं भवतः पत्नीं बोधयामि अहम् । भवान् किञ्चित्कालं ध्यानमन्दिरे उपविशतु'' इति ।

ततः नागराजः ध्यानमन्दिरं गत्वा उपविष्टवान् ।





अनन्तरं संन्यासी योगानन्दः नागराजस्य पत्नीम् उक्तवान् - "भवत्याः पत्युः कोऽपि रोगः नास्ति। ग्रामे सर्वेषाम् अपेक्षया सः एव धनिकः इति कारणतः अन्यान् सर्वान् अपि शत्रून् मन्यते सः। प्रतिवेशिनः सर्वेऽपि शत्रवः इति चिन्तयतः नागराजस्य भीतिः दिने दिने वर्धते। प्रतिवेशी धनिकः वस्त्रवणिक् सीतापतिः मत्समानः इति चिन्तयन् नागराजः सीतापतेः विषये असूयाम् अनुभवति। तेन तस्य मनश्शान्तिः न भवति। अन्यच्च तस्य दायादाः स्वकीयां भूमिं स्वयत्तीकर्तुं प्रतीक्षमाणाः सन्ति इति संशयः नागराजं दिने दिने दहति। असूयाद्वेषादिकम् एव वस्तुतः रोगस्य मूलं कारणम्। असूयया द्वेषभावनया च भवत्याः पतिः मुक्तः चेत् सः स्वस्थः भवति" इति।

एतत् वचनं श्रुत्वा नागराजस्य पत्नी - "एतादृशान् विषयान् मम पतिम् एव वक्तुम् अशक्ष्यत् भवान्। एतत् सर्वं किमर्थं मां वदति ?" इति ससन्देहं पृष्टवती।

तदा योगानन्दः उक्तवान् - "स्वकीयं दोषं यः कोऽपि न अङ्गीकरोति जगति। तत्रापि भवत्याः पतिः सर्वं सन्देहेन एव पश्यति। तादृशः स्वदोषं नाङ्गीकरोति। अतः एतं विषयं भवतीम् एव उक्तवान्" इति।

नागराजस्य पत्नी योगानन्दस्य वचनेन समाहिता पुनरपि पृष्टवती - "स्वामिन् ! किमपि औषधकरणक्रमं बोधयामि इत्युक्तं खलु भवता ! किं तत् औषधम् ? कथं च निर्मातव्यम् ?" इति।

तदा योगानन्दः उक्तवान् - "मया पूर्वं दत्तम् औषधं वस्तुतः न औषधम्, अपि तु शर्करायाः लवणस्य च मिश्रणम्। मद्विषये भवतोः विश्वासः उत्पन्नः भवेत् किल ! तदर्थं मया तथा कृतम्। तीर्थयात्रासमये भवत्याः पतिः अन्यविषयकम् असूयाद्वेषादिकं न चिन्तितवान्। अतः एव तस्मिन् समये सः स्वस्थः एव आसीत्। किन्तु यदा ग्रामं प्रत्यागतवान्, तदा यथापूर्वम् अन्येषां विषये असूयादिचिन्तनम् आरब्धवान्। अतः पुनरपि अस्वस्थः जातः सः" इति।

एतत् श्रुत्वा नागराजस्य पत्नी सदैन्यं पृष्टवती - "स्वामिन् ! इदानीं मया किं करणीयम् ?" इति।

तदा योगानन्दः क्षणकालं विचिन्त्य

उक्तवान् - "वस्तुस्थितेः विवेचनात् तु ज्ञायते यत् भवत्याः पतिः सीतापतौ दायादेषु च द्वेषभावं सन्देहं च प्राप्तवान् अस्ति इति। यदि भवती सीतापतौ दायादेषु च स्थितान् सद्गुणान् पतिम् अवगमयेत् तर्हि तदीयः व्याधिः स्वयम् उपशाम्यति। द्वेषादीनां स्थाने प्रीत्यादयः उत्पन्नाः चेत् भवत्याः पतिः स्वस्थः भविष्यति" इति।

अनन्तरं नागराजः तत्पत्नी च गृहं प्रतिगतवन्तौ। रात्रौ पत्नी पतिम् उक्तवती - "ग्रामे सर्वे वदन्ति यत् सीतापतिः सज्जनः गुणवान् च इति। किन्तु भवान् तु चिन्तयति यत् सः परमनीचः इति, तस्मिन् सद्गुणाः एव न सन्ति इति च। वस्तुस्थितिम् अजानती अहं जिज्ञासया पृच्छामि - सः सीतापतिः भवतः कीदृशम् अहितं कृतवान्?" इति।

"सीतापतिः मम अहितं कदापि न कृतवान् एव। यदा सः एतं ग्रामम् आगतवान् तदा प्रथमं मम समीपम् आगत्य वाणिज्यारम्भवार्तां निवेद्य आशीर्वादं प्रार्थितवान् आसीत्। इदानीम् अपि यदि सः मार्गे मिलेत् तर्हि भक्त्या नमस्कृत्य - 'सर्वं भवतः दयया सम्यक् प्रचलति' इति वदति" इति उक्तवान् नागराजः।

"एवं तर्हि संन्यासिनः पुरतः किमर्थम् उक्तं - सः सर्वदा मह्यं द्रुह्यति इति? भवान् एव विना कारणं तस्मै असूयति इति भाति मम" इति उक्तवती पत्नी।

तदा नागराजः शिरः चालयन् - "सत्यम्। भवत्या यत् उच्यते तत् सत्यम् एव इति भाति" इति उक्तवान्।

तदा पत्नी संन्यासिना दत्तम् औषध-चूर्णं किञ्चित् जलेन संयोज्य पत्ये दत्त्वा - "यथा सीतापतौ अकारणं द्वेषः तथैव दायादानां विषये अपि। तेषां सज्जनत्वं स्मर्तव्यम् अस्माभिः। तत् श्वः करवाव। इदानीं निद्रां करोतु तावत्" इति उक्तवती।

एवं नागराजस्य पत्नी संन्यासिनः मार्गदर्शनस्य अनुगुणं व्यवहरन्ती पत्यौ स्थितान् द्वेष-सन्देहासूयादीन् क्रमशः दूरीकृतवती। ततः नागराजस्य अस्वास्थ्यं समूलं नष्टम् अभवत्।



# र स वा र्ताः



## सङ्गीतस्य शक्तिः

एवं हि श्रूयते यत् क्षेत्रे सङ्गीतश्रावणेन फलोपचयः वर्धते इति, सङ्गीतस्य श्रवणात् पशवः अधिकं क्षीरं दुहन्ति इति च। कार्यालयस्य उद्योगिनां सामर्थ्यस्य वर्धनार्थम् अपि सङ्गीतं श्राव्यते । श्राव्यसाधन (वाक्मन्) द्वारा सङ्गीतं शृण्वन्तः गणितसमस्यायाः परिहारे उद्युक्ताः अपि भवन्ति केचन। सद्यः सङ्गीतं 'शस्त्रचिकित्साप्रकोष्ठम्' अपि प्राविशत् । जर्मनीदेशस्य मेनस्टन्विश्वविद्यालयस्य चिकित्सालये वैद्याः सङ्गीतं शृण्वन्तः हृदयशस्त्रचिकित्सां कुर्वन्ति । वैद्यानाम् उद्वेगं न्यूनीकृत्य एकाग्रतां वर्धयति सङ्गीतम् । एतेन शस्त्रचिकित्सा समीचीना भवति। एवं चेत् अग्रिमेषु दिनेषु स्मृतिहीनता-सम्पादनकार्यं सङ्गीतम् एव कुर्यात् कदाचित् !

## डयनशीलाः स्थालिकाः

अन्तरिक्षे दृश्यमानानां डयनशीलानां स्थालिकानां विषये एषु दिनेषु विशेषसंशोधनं प्रचलत् अस्ति। अमेरिकादेशीयः रिचर्ड्थाम्सन्वर्यः डयनशीलस्थालिकानां विषये विषयसङ्ग्रहणं कुर्वन् अस्ति । एताः स्थालिकाः क्षणमात्रं दृष्टिगोचराः भवन्ति, ततः अदृश्यतां गच्छन्ति च। अतः एतासां विषये विवरणसङ्ग्रहः नितरां कष्टकरः। १९७६ तमे वर्षे इरानदेशस्य राजधान्यां टेहरान्नगरे यदा डयनशीला स्थालिका दृष्टा तदा कश्चित् विमानचालकः जेट् विमानेन ताम् अनुसृतवान् । मध्येमार्गं तस्य विमानस्य 'एलेक्ट्रानिक्व्यवस्था' निष्क्रिया जाता। यदा तेन मार्गपरिवर्तनं कृतं पुनः सा व्यवस्था कार्यशीला जाता । तत्काले डयमानस्थालिकायाः कश्चन भागः भूमौ पतितः इत्यपि श्रूयते । थाम्सन्वर्यः वदति यत् भारतीयपुराणेषु वर्णितानां विमानानां डयमानस्थालिकानां च विशेष-सादृश्यम् अस्ति इति। सः एतदपि वदति यत् कृष्णः यत् अग्निचक्रं धृतवान् आसीत् तदपि डयमानस्थालिकासदृशम् एव आसीत् इति।






# दुराचारफलम्

कश्चन निर्धनः पूर्वम् आसीत् । तस्य आनन्दः नाम कश्चित् पुत्रः आसीत् । सः नितरां दुर्बलः । कार्याणि कर्तुं सर्वथा असमर्थः आसीत् सः । पुत्रस्य शारीरकम् असामर्थ्यं जानन् पिता एव तं पोषयन् आसीत् । किन्तु दैनन्दिन-भोजन-व्यवस्था अपि यदा कष्टाय जाता तदा सः चिन्तितवान् यत् पुत्रः कुत्रापि उद्योगे नियोजनीयः इति ।

अतः पुत्रेण सह गृहात् निर्गतवान् पिता । किन्तु आनन्दाय उद्योगं दातुं कोऽपि सिद्धः न जातः । अन्ते पिता आनन्दं ग्रामाधिकारिणः समीपं नीतवान् ।

ग्रामाधिकारी महादुष्टः । अतः तस्य गृहं प्रति उद्योगार्थं कोऽपि न आगछति स्म । यदि कश्चित् आगच्छेत् तर्हि सः दीर्घकालं न तिष्ठति स्म ।

एतत् जानन् अपि आनन्दस्य पिता अनन्यगतिकतया पुत्रं तत्र नीतवान् आसीत् । 'वेतनं किमपि न प्राप्यते चेदपि भोजनं वस्त्रं चापि वा लभ्यते खलु' इति चिन्तनम् आसीत् आनन्दास्य पितुः । ग्रामाधिकारी आनन्दाय उद्योगं दत्तवान् ।

त्रीणि वर्षाणि अतीतानि । आनन्दः ग्रामाधिकारिणम् उक्तवान् - "अहं गच्छामि" इति ।

ग्रामाधिकारी तस्मै त्रीणि रजतनाणकानि दत्त्वा - "एकैकस्य वर्षस्य निमित्तम् एकैकं नाणकं दत्तं मया । स्वीकृत्य गच्छतु" इति उक्तवान् ।

"त्रिभ्यः वर्षेभ्यः पूर्वं यत् वस्त्रम् अहं धृत्वा आगतवान् तदेव अस्ति अद्यापि । एवमेव गन्तव्यं वा मया ?" इति पृष्टवान् आनन्दः ।

"वस्त्रं दीयते इति मया पूर्वं न उक्तम् आसीत् । धनं दत्तवान् अहम् इत्येव विशेषः" इति उक्तवान् ग्रामाधिकारी ।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



आनन्दः तानि नाणकानि स्वीकृत्य नगरं प्रति प्रस्थितवान्। नगरगमनमार्गे अरण्य-खातादिकम् अतिक्रमणीयम् आसीत्। आनन्दः खातमार्गेण यदा गच्छन् आसीत् तदा कश्चन भिक्षुकः तस्य अभिमुखम् आगतः।

सः भिक्षुकः नितराम् उन्नतः आसीत्। तस्य दर्शनात् अप्रयत्नेन एव आनन्दस्य मुखात् चीत्कारः निर्गतः।

तदा सः भिक्षुकः उक्तवान् - "अये, भीतिः मास्तु। मह्यम् एकं नाणकं ददातु। तावता अलम्" इति।

"मम समीपे त्रीणि एव नाणकानि सन्ति। एतैः मया वस्त्रं क्रेतव्यम्" इति उक्तवान् आनन्दः।

"भवत्समीपे त्रीणि नाणकानि सन्ति खलु? तेषु एकं मह्यं ददातु। भवतः वस्त्राणाम् अपेक्षया मम वस्त्राणि अधिकं जीर्णानि, पश्यतु" इति उक्तवान् भिक्षुकः।

आनन्दः तस्मै भिक्षुकाय एकं नाणकं दत्त्वा ततः अग्रे प्रस्थितवान्। एवं यदा किञ्चिद्दूरं गतं तदा अपरः भिक्षुकः सम्मुखम् आगतः। पूर्वं दृष्टस्य भिक्षुकस्य अपेक्षया एतस्य औन्नत्यम् अधिकम् आसीत्। एषः अपि पूर्वं प्राप्तः भिक्षुकः इव एव बहुधा याचनां कृत्वा एकं नाणकं प्राप्तवान्। खातप्रदेशस्य अन्ते अपरः भिक्षुकः प्राप्तः। स तु पूर्वं दृष्टयोः भिक्षुकयोः अपेक्षया अपि अधिकम् उन्नतः आसीत्। सः अपि 'नाणकं ददातु' इति आनन्दं बहुधा प्रार्थितवान्। भिक्षुकस्य शोचनीयां स्थितिं दृष्ट्वा आनन्दः स्वसमीपे स्थितं तृतीयं नाणकं तस्मै दत्तवान्।

नाणकं स्वीकृत्य सः भिक्षुकः उक्तवान् - "स्वसमीपे स्थितानि त्रीणि अपि नाणकानि दत्तानि खलु भवता? अतः एकैकस्य एकैकम् इव त्रीन् वरान् ददामि। अतः अपेक्षितं प्रार्थयतु" इति।

आनन्दः क्षणकालं विचिन्त्य उक्तवान् - "पूर्वं कृष्णः यदा वेणुं वादयति स्म तदा गोप्यः नृत्यन्ति स्म इति श्रूयते। अतः श्रोतॄणां सम्मोहने नृत्यकारणे च समर्थः अपूर्वः वेणुः मह्यम् आवश्यकः" इति।

"तत् ददामि। इतोऽपि उत्तमम् अपरं वरं प्रार्थयतु" इति उक्तवान् भिक्षुकः।

"दूरस्थं वस्तु लक्ष्यीकृत्य प्रयोक्तुं योग्यः, लक्ष्यभेदने समर्थः सृगः कश्चन आवश्यकः" इति द्वितीयं वरं प्रार्थितवान् आनन्दः । भिक्षुकः पुनरपि उक्तवान् यत् तृतीयं वरं ददामि । भवान् यत् इच्छति तत् वदतु इति । सः तृतीयं वरम् एवं प्रार्थितवान् - "अहं यं यत् पृच्छामि सः तत् मह्यं दद्यात्" इति ।

"अस्तु । भवतः अपेक्षा यथा तथैव भविष्यति" इति उक्त्वा भिक्षुकः ततः निर्गतवान् ।

आनन्दः विश्रान्त्यर्थं पर्वतस्थस्य कस्यचित् वृक्षस्य अधः शयनं कृतवान् । विश्रान्तिं समाप्य यदा उत्थितवान् तदा तस्य पार्श्वे वेणुः, सृगः च आसीत् ।

आनन्दः सन्तोषेण नगरं गतवान् ।

नगरं गतः आनन्दः आपणं गत्वा अपेक्षितं वस्त्रं स्वीकृतवान् । कस्यचित् सकाशात् अश्वम् अपि स्वीकृतवान् सः । प्रार्थनामात्रेण लोभिनः अपि तस्मै तेन प्रार्थितं यच्छन्ति स्म । सः अश्वम् आरुह्य ग्रामं प्रत्यागतवान् ।

ग्रामं प्रति आगमनसमये ग्रामाधिकारी अभिमुखम् आगतवान् । आनन्दः अश्वं स्थगयित्वा - "नमस्काराः श्रीमन् !" इति उक्तवान् ।

ग्रामाधिकारी तम् आश्चर्येण पश्यन् पृष्टवान् - "एतावता अल्पेन एव कालेन भवान् कथं महान् जातः ?" इति ।

"सर्वम् अदृष्टस्य फलम्" इति उक्तवान् आनन्दः ।

"हस्ते वेणुः दृश्यते ! किं परिश्रमं



परित्यज्य सङ्गीतविद्वान् भवितुम् इच्छा वा ?'' इति उपहासपूर्वकं पृष्टवान् ग्रामाधिकारी।

''यदि दैवानुग्रहः स्यात् तर्हि सङ्गीतविद्वान् अपि भवेयम्। तदस्तु, एतं सृगं पश्यतु। एतेन तालवृक्षाग्रे स्थितं पक्षिणम् अपि पातयितुं शक्नोमि अहम्'' इति गर्वेण उक्तवान् आनन्दः।

''हुँ सर्वं मिथ्या'' इति उक्तवान् ग्रामाधिकारी।

''यदि मम वचने भवतः विश्वासः न स्यात् तर्हि पणं निश्चिनोतु'' इति उक्तवान् ग्रामाधिकारिणम् आनन्दः।

''अस्तु तर्हि। यदि भवान् तालवृक्षस्थं पक्षिणं पातयेत् तर्हि मम समग्रा सम्पत्तिः भवते एव। भवता पातितः पक्षी अपि भवते आनीय दीयते। किन्तु तं पक्षिणं पातयितुं सामर्थ्यं कुत्र भवतः ?'' इति उक्तवान् ग्रामाधिकारी।

आनन्दः सृगस्य साहाय्येन पक्षिणं पातितवान्। स च पक्षी तालवृक्षमूलस्थे कण्टकमये गुल्मे पतितः। तं पक्षिणम् आनेतुं ग्रामाधिकारी गुल्मस्य मध्यभागं गतवान्। तावता एव कण्टकैः तदीयं शरीरं व्रणितं जातम् आसीत्। तत्काले आनन्दः वेणुवादनम् आरब्धवान्। वेणुध्वनेः अनुगुणं ग्रामाधिकारी नर्तने प्रवृत्तः। बहुकालं यावत् आनन्दः वेणुं वादितवान्।

कण्टकयुक्तस्य गुल्मस्य मध्ये नृत्यात् ग्रामाधिकारिणः शरीरं नितरां व्रणितम्। तदीयानि वस्त्राणि छिन्नानि। शरीरात् रक्तधारा निर्गता। अन्ते आनन्दः वेणुवादनं स्थगितवान्।

यदा दीर्घं निःश्वसन् ग्रामाधिकारी गुल्मात् बहिः आगतवान् तदा आनन्दः तम् उक्तवान् - ''भवतः गृहे त्रीणि वर्षाणि कार्यं कृत्वा निर्गमनसमये मम वस्त्राणि अपि एवम् एव आसन्'' इति।

स्पर्धायां पराजयं प्राप्तवान् ग्रामाधिकारी विना वचनम् आनन्दाय सर्वस्वम् अर्पितवान्। तत् धनं स्वीकृत्य नगरं गतः आनन्दः सन्तोषेण जीवनं यापितवान्।



# प्रकृतिवैचित्र्याणि-

## पक्षचालनं विना डयमानः पक्षी

सर्वे पक्षिणः डयनसमये पक्षौ चालयतः एव। किन्तु 'अल्बट्रोस्' नामकः कारण्डवसदृशः पक्षी पक्षौ अचालयन् एव डयते। न केवलं द्वित्राः घण्टाः, अपि तु पञ्चषाणि दिनानि यावत् अपि सः निरन्तरं डयनं कर्तुं शक्नोति। 'एवं डयनसमये तेन कदापि निद्रा एव न क्रियते वा ?' इति सन्देहः स्यात् कदाचित्। सः निद्रां न करोति इति न। आकाशे निश्चलं डयमानः एव सः निद्रासुखम् अपि अनुभवति।





## पुष्पाणि किं निद्रान्ति ?

पुष्पाणां निद्रां दृष्टवन्तः वा भवन्तः ? तानि तु दृष्टवन्तः स्युः एव भवन्तः खलु - यानि पुष्पाणि मुकुलतां प्राप्य निद्रालीनतां सूचयन्ति ? किन्तु एवं मुकुलीभवनं निद्रापदेन निर्देष्टुं न शक्यम्। पुष्पाणि प्रायः कोमलानि। परिसरे यत् परिवर्तनं जायते ततः आत्मनः रक्षणार्थं तानि एवम् आचरन्ति। प्रकृत्या कल्पिता व्यवस्था एषा। रात्रौ यदा परिसरे उष्णता ह्रासं गच्छति, अन्धकारश्च यदा प्रसरति तदा पुष्पदलानि मुकुलाकारतां प्राप्नुवन्ति। पुष्पं च निद्रामग्नम् इव दृश्यते च। कानिचन पुष्पाणि दिने उष्णांशस्य उग्रतातः स्वस्य रक्षणार्थं मुकुलीभवनव्यवस्थाम् आश्रयन्ति।

## स्वरूपं परिवर्तयन्ति मरुभूमिस्थाः सिकताराशयः।

मरुभूमौ सिकताराशयः इदानीं यत्र भवन्ति तत्र किञ्चित्कालानन्तरं न भवन्ति। प्रातः दृष्टाः सिकताराशयः सायं न दृश्यन्ते, अन्यथा दृश्यन्ते वा। मरुभूमौ वेगेन सञ्चरन् वायुः एव अत्र कारणम्। वेगवतः वायोः कारणतः क्षणाभ्यन्तरे एव सिकताराशेः स्वरूपं परिवृत्तं भवति। अतः मरुभूमौ वयं कुत्र स्मः इति, कस्यां दिशि गच्छन्तः स्मः इति च अभिज्ञानं क्लेशकरम् एव।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!






SUPER
RUBBER










THE

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जुलै - ९४ मासे प्रकटयिष्यामः ।


M. Lakshmi


M. Lakshmi

• उपरितनं चित्रद्वयं पश्यन्तु । • युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे - २० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु । • अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । • स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । • शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्य विषयः न लेखनीयः । • अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीयाः -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपसर्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'मार्च्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **सखी एका अस्ति चेदपि अहो सन्तोषपूरः !**

द्वितीयचित्रम् - **क्रीडनकानां शतेनापि नास्ति सन्तोषलेशः ।**

प्रेषिका - श्रीमती विजयलक्ष्मीः एम्., २३८ 'मञ्जूषा' V 'ए' मुख्यमार्गः, II स्टेज्, हेण्णूरुबानसवाडिरोड्ले औट्, बेङ्गलूरु - ५६० ०३३


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

